असुरकुमारादीनां क्रमेणाश्वत्थादयश्चैत्यवृक्षा ये सिद्धायतनादिद्वारेषु श्रूयन्ते ।

व्यन्तराणामष्टौ-

एएसि णं अट्ठण्हं वाणमंतराणं देवाणं अट्ठ चेइयरुक्खा पण्णत्ता । तं जहा-

" कालंबो उ पिसायाणं, वडो जक्खाण चेइयं ।
तुलसी भूयाण भवे, रक्खसाणं च कंडओ ॥ १ ॥
असोगो किंनराणं च, किंपुरिसाणं च चंपओ ।
नागरुक्खो भुयंगाणं, गंधव्वाणं तु तिंदुओ ॥ २ ॥ "

तेषां चैत्यवृक्षाः मणिपीठिकानामुपरिवर्त्तिनः सर्वरत्नमया उपरि च्छत्रध्वजादिभिरलङ्कृताः सुधर्मादिसभानामग्रतो ये श्रूयन्ते ते एत इति संभाव्यन्ते । ये तु-" पिसाइ कलंबवडए; तुलसे भूए तह य होइ कडंगे । असोए चंपए वा, नागे तह तुंबुए चेव " ॥ १ ॥ त्ति । ते चिह्नभूता एतेभ्योऽन्य एवेति " कालंबो उ " इत्यादि श्लोकद्वयं कण्ठ्यम् । स्था० ८ ठा० ।

वाणमन्तराणां चैत्यवृक्षमानं, वर्णकश्चैवम्-

वाणमंतराणं देवाणं चेइयरुक्खा अट्ठ जोयणाइं उड्ढं उच्चत्तेणं पण्णत्ता । स० १ सम० । जी० । तासि णं मणिपेढियाणं उप्पिं पत्तेयं पत्तेयं चेतियरुक्खा पण्णत्ता । ते णं चेतियरुक्खा अट्ठजोयणाइं उड्ढं उच्चत्तेणं अद्धजोयणं उव्वेहेणं दो जोयणाइं खंधा अद्धजोयणं विक्खंभेणं छज्जोयणाइं विडिमा बहुमज्झदेसभाए अट्ठजोयणाइं आयामविक्खंभेणं सातिरेगाइं अट्ठजोयणाइं सव्वग्गेणं पण्णत्ताइं । तेसि णं चेतियरुक्खाणं अयमेतारूवे वण्णावासे पण्णत्ते । तं जहा-वइरामयमूलरययसुपइट्ठियविडिमा रिट्ठामयविपुलकंदा वेरुलियरुचिलखंधा सुजायवरजायरूवपढमगविसालसाला णाणामणिरयणविविहसाहप्पसाहवेरुलियपत्ततवणिज्जपत्तवेंटा जंबूणयरत्तमउयसुकुमालपवालपल्लववरंकुरग्गधरा विचित्तमणिरयणसुरभिकुसुमफलभारणमियसाला सच्छाया सप्पभा ससिरिया सउज्जोया अमयरससमरसफला अहियणयणमणणिव्वुतिकरा पासाईया दरिसणिज्जा अभिरूवा पडिरूवा । ते णं चेइयरुक्खा अण्णेहिं बहूहिं तिलयलवयछत्तोवगसिरीससत्तवण्णदहिवण्णलोद्धयधवचंदणनीवकुडयकयंबफणसतालतमालपियालपियंगुपारावयरायरुक्खनंदिरुक्खेहिं सव्वओ समंता संपरिक्खित्ता । ते णं तिलय० जाव नंदिरुक्खा मूलवंतो कंदवंतो० जाव सुरम्मा । ते णं तिलया० जाव नंदिरुक्खा अण्णेहिं बहूहिं पउमलयाहिं० जाव सामलयाहिं सव्वओ समंता संपरिक्खित्ता । ताओ णं पउमलताओ० जाव सामलयाओ निच्चं कुसुमियाओ० जाव पडिरूवाओ । तेसि णं चेतियरुक्खाणं उप्पिं अट्ठट्ठमंगलगा बहवे कण्हचामरज्झया० जाव पडिरूवा । तेसि णं चेतियरुक्खाणं पुरओ पत्तेयं२ मणिपेढियाओ पण्णत्ताओ । ताओ मणिपेढियाओ जोयणं आयामविक्खंभेणं अद्धजोयणं बाहल्लेणं सव्वमणिमईओ अच्छाओ० जाव पडिरूवाओ ॥

तेषां च चैत्यवृक्षाणामयमेतद्रूपो वर्णावासः प्रज्ञप्तः तद्यथा-"वइरामयेत्यादि ।" वज्राणि वज्रमयानि मूलानि येषां ते वज्रमूलाः, तथा रजता रजतमयी सुप्रतिष्ठिता विडिमा बहुमध्यदेशभागे ऊर्ध्वं विनिर्गता शाखा येषां ते रजतसुप्रतिष्ठितविडिमाः, ततः पूर्वपदेन कर्मधारयः समासः । "रिट्ठामय" इत्यादि । रिष्टमयः कन्दः, तथा वैडूर्यो वैडूर्यरत्नमयो रुचिरः स्कन्धो येषां ते तथा, ततः पूर्वपदेन कर्मधारयः समासः । " सुजात " इत्यादि । सुजातं मूलद्रव्यशुद्धं वरं प्रधानं यद् जातरूपं तदात्मिका प्रथमका मूलभूता विशाला शाला शाखा येषां ते सुजातवरजातरूपप्रथमकविशालशाखाः । "णाणामणिरयण" इत्यादि । नानामणिरत्नानां नानामणिरत्नात्मिका विविधाः शाखाः प्रशाखा येषां ते तथा, तथा वैडूर्याणि वैडूर्यमयानि पत्राणि येषां ते तथा, तपनीयानि तपनीयमयानि पत्रवृन्तानि येषां ते तथा, ततः पूर्ववत् पदद्वयमीलनेन कर्मधारयः । जाम्बूनदा जाम्बूनदनामकसुवर्णविशेषमया रक्ता रक्तवर्णा मृदवो मनोज्ञाः सुकुमाराः सुकुमारस्पर्शा ये प्रवाला ईषदुन्मीलितपत्रभावाः, पल्लवाः संजातपरिपूर्णप्रथमपत्रभावरूपाः, वराङ्कुराः प्रथममुद्भिद्यमाना अङ्कुराः, तान् धरन्तीति जाम्बूनदरक्तमृदुसुकुमारप्रवालपल्लवाङ्कुरधराः । क्वचित्पाठः-" जंबूणयरत्तमउय " इत्यादि । तत्र जाम्बूनदानि रक्तानि, मृदूनि अकठिनानि, सुकुमाराणि अकर्कशस्पर्शानि, कोमलानि मनोज्ञानि, प्रवालपल्लवाङ्कुरा यथोदितस्वरूपाः, अग्रशिखराणि च येषां ते तथा । " विचित्तमणिरयण " इत्यादि । विचित्रमणिरत्नानि विचित्रमणिरत्नमयानि यानि सुरभीणि कुसुमानि फलानि च तेषां भरेण नमिता नम्राः शालाः शाखा येषां ते तथा, सती शोभना छाया येषां ते सच्छायाः, तथा सती शोभना प्रभा कान्तिर्येषां ते सत्प्रभाः, अत एव सश्रीकाः; सह उद्योतेन वर्तते मणिरत्नानामुद्योतभावेन सोद्योताः, अमृतरससमरसानि फलानि येषां ते अमृतरससमफलाः । अधिकमतिशयेन नयनमनोनिर्वृतिकराः, "पासाईया " इत्यादि विशेषणचतुष्टयं प्राग्वत् । " ते णं चेइयरुक्खा" इत्यादि । ते चैत्यवृक्षा अन्यैर्बहुभिस्तिलकलवकच्छत्रोपगशिरीषसप्तपर्णदधिपर्णलोध्रकधवचन्दननीपकुटजकदम्बपनसतालतमालप्रियालप्रियङ्गुपारापतराजवृक्षनन्दिवृक्षैः सर्वतः समन्तात् संपरिक्षिप्ताः । " ते णं तिलगा" इत्यादि । ते तिलका यावन्नन्दिवृक्षा मूलवन्तः कन्दवन्त इत्यादि वृक्षवर्णनं प्राग्वत् तावद् वक्तव्यं यावदनेकशकटरथयानशिबिकास्यन्दमानिकाप्रतिमोचनाः सुरम्या इति । "ते णं तिलगा" इत्यादि । ते तिलका यावन्नन्दिवृक्षा अन्याभिर्बहुभिः पद्मलताभिः नागलताभिरशोकलताभिश्चम्पकलताभिश्चूतलताभिर्वनलताभिर्वासन्तिकालताभिरतिमुक्तकलताभिः कुन्दलताभिः श्यामलताभिः सर्वतः समन्तात् सम्परिक्षिप्ताः । " ताओ णं पउमलयाओ० जाव सामलयाओ निच्चं कुसुमियाओ " इत्यादि लतावर्णनं तावद् वक्तव्यं यावत् " पडिरूवाओ " इति । व्याख्या चास्य पूर्ववत् । " तेसि णं " इत्यादि । तेषां चैत्यवृक्षाणामुपरि अष्टावष्टौ मङ्गलकानि बहवः कृष्णचामरध्वजा इत्यादि पूर्ववत्तावद् वक्तव्यं यावद् बहवः सहस्रपत्रहस्तकाः सर्वरत्नमया यावत् प्रतिरू-

पका इति। "तेसि णं" इत्यादि। तेषां चैत्यवृक्षाणां पुरतः प्रत्येकं प्रत्येकं मणिपीठिकाः प्रज्ञप्ताः ताश्च मणिपीठिका योजनमायामविष्कम्भाभ्यामर्द्धयोजनं बाहल्येन सर्वात्मना मणिमय्य अच्छा इत्यादि प्राग्वत्। जी० ३ प्रति०।

चेइयवंदण-चै (त्य) त्यवन्दन-न०। स्त्री०। चित्तस्य भावाः कर्माणि वा "वर्णदृढादिभ्यः ष्यञ्च" ॥५।१।१२३॥ ( पाणि० ) इति ष्यञ् चैत्यानि जिनप्रतिमाः, ता हि चन्द्रकान्तसूर्यकान्तमरकतमुक्ताशैलादिदलनिर्मिता अपि चित्तस्य भावेन कर्मणा वा साक्षात्तीर्थकरबुद्धिं जनयन्तीति चैत्यान्यभिधीयन्ते। तेषां वन्दनं स्तवनं कायवाङ्मनःप्रणिधानं चैत्यवन्दनम्। प्रव० १ द्वार। चित्तं मनस्तद्भावश्चैत्यं, तदनुस्वाज्जिनबिम्बा अपि चैत्यानि, कारणे कार्योपचारात्। तेषां वन्दना पूर्वोक्तशब्दार्था चैत्यवन्दना।

उक्तं च-

" चित्तं मणो पसत्थं, तब्भावो चेइय त्ति तज्जणगं।
जिणपडिमाओ तेसिं, वंदणमभिवायणं तिविहं ॥ १ ॥ "

यद्वा-चितेर्लेप्यादिचयनस्य भावः कर्म वा चैत्यम्, तच्च संज्ञाशब्दत्वात् देवताप्रतिबिम्बे प्रसिद्धम्। चूर्णौ तु-'चिती' संज्ञाने, काष्ठकर्मादिषु प्रतिकृतिं दृष्ट्वा संज्ञानमुत्पद्यते। यथा अर्हदादिप्रतिमेति। शेषं प्राग्वत्। ननु भावार्हदादीनामप्येवं वन्दना क्रियते, तत्कथं चैत्यवन्दनमेवोच्यते?। सत्यम्-प्रायेणास्याश्चैत्याग्रे करणात्।

तथा च बृहद्भाष्यम्-

"भावजिणप्पमुहाण वि, सव्वेसि वि जइ वि वंदणा तह वि।
चेइयअग्गे काउं, तीरेई वंदणा तेणं ॥ २ ॥
जिणबिंबाभावे पुण, ठवणा गुरुसक्खिया वि कीरंति।
चिइवंदण च्चिय इमा, तत्थ वि परमिट्ठिठवणाओ ॥ ३ ॥
अहवा जत्थ व तत्थ य, पुरओ परमिट्ठिठवणाओ।
कीरइ बुहेहिँ एसा, तेया चिइवंदणा तम्हा " ॥ ४ ॥

करणत्रिकेण देवप्रणिधाने, सङ्घा० १ प्रस्ता०।

विषयसूची-

( १ ) अधिकारसंग्रहः।
( २ ) दश त्रिकाणि।
( ३ ) नैषेधिकीत्रयम्।
( ४ ) तत्र भुवनभानुकथानकम्।
( ५ ) पूजात्रिकम्।
( ६ ) भावना।
( ७ ) त्रिदिङ्निरीक्षणवर्जने गन्धारश्रावककथानकम्।
( ८ ) स्तुत्यकरणानि।
( ९ ) मुद्रात्रिकप्ररूपणम्।
( १० ) प्रणिधानम्।
( ११ ) अभिगमः।
( १२ ) चैत्यवन्दनदिक्।
( १३ ) अवग्रहः।
( १४ ) त्रिविधवन्दना।
( १५ ) स्तुतिविचारः।
( १६ ) चैत्यवन्दनविधिः।
( १७ ) जघन्यवन्दनाविचारः।
( १८ ) अपुनर्बन्धकाद्योऽधिकारिणः।
( १९ ) अधिकारिता।
( २० ) नमस्कारद्वारम्।
( २१ ) संपद्द्वारम्।
( २२ ) प्रणिपातदण्डके वाराः।
( २३ ) चतुर्विंशतिस्तवः।
( २४ ) सिद्धस्तुतिः।
( २५ ) श्रुतस्य स्तुतिः।
( २६ ) वीरस्तुतिः।
( २७ ) वैयावृत्ये स्तुतयः।
( २८ ) द्वादश अधिकाराः।
( २९ ) शरणीयद्वारम्।
( ३० ) जिनद्वारम्।
( ३१ ) यो यत्र स्तूयते।
( ३२ ) येऽधिकारा यत्संमताः स्तुतयः संस्कृतकाव्यानि।
( ३३ ) षोडश आकाराः।
( ३४ ) स्तोत्रलक्षणम्।
( ३५ ) कतिवेलं चैत्यानि वन्देत।
( ३६ ) चैत्यवन्दनकरणविधिः।
( ३७ ) प्रकीर्णकवार्त्ताः।

( १ ) तद्विधिं विभणिषुरधिकारसङ्ग्रहमाह-

इह च प्रतिदिनानुष्ठेयं चैत्यवन्दनादिकं सङ्घस्याचारविधिं वक्ष्यामीत्युक्तम्। तत्र तावत्-

" साहूण गिहत्थाण य, सव्वाणुट्ठाणमूलमक्खायं।
चिइवंदणमेव जओ, ता तम्मि वियारणा जुत्ता " ॥ १ ॥

इति वचनात् " सामाइयछिप्पहि वि, चउवीसं पुव्वया चेव" इत्यावश्यकचूर्णिवचनाच्च, प्रथमं चैत्यवन्दनाविधिं विभणिषुर्भाष्यकारः शास्त्रमुखापरपर्यायं तद्द्वारगाथाचतुष्टयमाह-

दहतिय १ अहिगमपणगं, २
दुदिसि ३ तिहुग्गह ४ तिहा उ वंदणया ५।
पणिवाय ६ नमुक्कारं ७,
वण्णा सोलसयसीयाला ८ ॥ २ ॥

इह सामान्येन साधुश्रावकादिबहुसमानजिनभवनप्रवेशादिसमयविधीयमाननैषेधिक्यादिप्रणिधानपर्यवसानसकलचैत्यवन्दनाविधानप्रतिपादनप्रधानं त्रिंशत्स्थानकनिबद्धं दशत्रिकाख्यं प्रथमद्वारम्-(दहतिय त्ति। दशानि दशसंख्यानि त्रिकाणि नैषेधिकीत्रयादिरूपाणि यत्र द्वारे तद्दशत्रिकम्। वक्ष्यति च-"तिन्नि निसीही" इत्यादि। अत्र च सर्वत्र विभक्तिलोपादिकं प्राकृतलक्षणवशादवसातव्यम्।१। पुनः ऋद्धिमतामनृद्धिमतां चाभिगमानधिकृत्य विशेषतश्चैत्यादिप्रवेशविध्यभिधायकं द्वितीयमभिगमद्वारम्-( अहिगमपणगं ति ) अभिगमानां चैत्यादिप्रवेशे विधिविषयद्वार, शयाणां पञ्चकमभिगमपञ्चकम्। भणिष्यति च-"सच्चित्तदव्वओ उज्झण" इत्यादि। २। प्रविश्य जिनगृहे विहितयथोचितनैषेधिक्यादिकरणेनरनारीगर्भागपूजादित्रिविधस्तया स्वस्वोचिता दिग् ज्ञेयेति तृतीयं दिग्द्वारम्-( दुदिसि त्ति ) द्वे वामदक्षिणलक्षणे दिशौ काष्ठे क्रमतः स्त्रीपुंसयोर्योग्यतया वन्दनामाश्रित्य समाहृते वर्णिते वा यत्र तद् द्विदिग्। अभिधास्यति च-"वंदति जिणे दाहिण" इत्यादि।३। वामेतरदिक्स्थैश्च नैर्जिनान् कियत् दूरं वन्दना विधेयेति दिगनन्तरं चतुर्थमवग्रहद्वारम्-( तिहुग्गह त्ति ) त्रिधा जघन्यमध्यमोत्कृष्टभेदात् त्रिप्रकारोऽवग्रहः मूलबिम्बवन्दनास्थानान्यन्तरालभूभा-

गरूपः। गदिष्यति च-" नवकारजहन्न " इत्यादि ॥४॥ सक-
रूपा च गृहस्थैश्च क्रियन्तेदा वन्दना कार्येति तद्भेदाभिधाय
चैत्यवन्दनाद्वारम्-(तिहा उ वंदण य त्ति) त्रिधा जघन्यादिभे-
दात्त्रिभेदा। कस्याह-वन्दनेति। "भामा सत्यभामेति" न्यायात्
चैत्यवन्दना पूर्वोक्तशब्दार्था। प्रतिपादयिष्यते च-"नवकारेण
जहन्ना" इत्यादि। तुशब्दो विशेषणार्थः। तेन ग्रन्थान्तरप्रसि-
द्धजघन्यादिभेदाभावधाऽपि, एवमवभ्रदोऽपि शास्त्रान्तरोक्तो द्वा-
दशधाऽवसातव्यः। एतच्चोपरिष्टाद् दर्शयिष्यते॥५॥ चैत्यव-
न्दना च प्रायः प्रणिपातपूर्वा निरूपितेति तत्स्वरूपनिरूपकं षष्ठं
प्रणिपातद्वारम्-(पणिवाय त्ति) प्रणिपातः प्रणामः, स चात्रोत-
त्कृष्टतः पञ्चाङ्गो ज्ञातव्यः, नाऽष्टाङ्गः। तस्य प्रवचनेऽप्रसिद्ध-
त्वात्। अभिधास्यन्ति च-" पणिवाओ पंचंगो " इत्यादि ॥६॥
कृतप्रणिपातैश्च प्रथमतो नमस्कारा भणनीयाः, अतः सप्तमं
नमस्कारद्वारम्-( नमुक्कार त्ति ) नमस्कारो जिनगुणोत्कीर्त-
नपरा वचनपद्धतयो, मङ्गलवृत्तानीति यावत्। ते चात्रोत्कृष्टतः
पुरुषानाधिक्यादष्टोत्तरं शतं ज्ञेयम्। निरूपयिष्यति च-" सुमह-
त्यनमुक्कार " इत्यादि ॥७॥ नमस्काराश्च वर्णात्मका इति वर्ण-
संख्याद्वारमष्टमम्-वर्णेत्यादि । यद्वा-सर्वमप्यनुष्ठानमहीना-
तिरिक्ताक्षरं करणीयं, विपरीते दोषसंभवात्। तथा चागमः-

" अहिए कुणालकरणो, हीणे विज्जाहराइदिट्ठंता।
बालाइराण जोयण-भेसज्जविवज्जओ जुमए ॥१॥ "

अहीनाद्यक्षरत्वं च वर्णसंख्यापरिज्ञाने सति भवतीत्यष्टमं
वर्णसंख्याद्वारम्-( वन्ना सोलसयसीयाल त्ति ) वर्णा अक्ष-
राणि, ते च सामान्यतोऽत्र चैत्यवन्दनाधिकारे नमस्कारक्ष-
माश्रमणादिषु नवसु स्थानेष्वपुनरुक्ता ध्रुवं भणनीयाश्च षो-
डशशतानि सप्तचत्वारिंशदधिकानि ज्ञातव्याः।

तथाहि-

" अडसट्ठि ६८ अट्ठवीसा २८,
नवनउअसयं च १९९ दुसयसगनउया २९७ ॥
दोगुणतीस २२९ दुसट्ठा २६०,
दुसोल २१६ अडनउयसय १९८ दुवन्नसयं १५२ ॥१॥
इअ नवकार १ खमासम-
ण २ इरिय ३ सक्कत्थयाइदंडेसु ४।
पणिहाणेसु य ६, अदुरु-
त्तवन्नसोलसयसीयाला ॥२॥ "

यदिह नवकारादिवर्णपरिसंख्यानं तत्तदादिमूलत्वात्सर्वधर्म-
स्येति ज्ञापनार्थम्। एवं पदादिष्वपि वाच्यम्।

इगसीयसयं तु पया, सगनउई संपयाउ पण दंडा।
बारसऽहिगार चउ वं-दणिज्ज सरणिज्ज चउहजिणा॥

वर्णैश्च पदानि स्युरिति वर्णद्वारानन्तरं नवमं पदद्वारम्-
" इगसीय " इत्यादि। एकाशीत्यधिकं शतं पदान्यत्रौघतो
नमस्कारादिस्थानसप्तके ज्ञातव्यानि। तुर्विशेषणे। विशेषश्चाय-
म्-यद्यपि " इच्छामि खमासमणो, जे य अईया सिद्धा " इत्यादिगताभ्य-
तिरिक्तान्यपि पदान्यप्यत्र सन्ति तथाऽपि पूर्वबहुश्रुतैः संपदा-
दिकं किमपि कारणान्तरमधिकृत्यैव पदानि स्वस्वभा-
ष्यादिषूक्तानीति तन्मार्गानुगामितयाऽस्माभिरप्यैतावन्त्येव
तान्युक्तानि, नाधिकानीति। तथा चोक्तं लघुभाष्ये—

" नव बत्तीस तितीसा, ति चत्त अडवीस सोल वीस पया।
मंगलइरिया सक्क-त्थयाइसुं एगसीइसयं ॥१॥ "

एवमन्यत्रापि न्यूनाधिकत्वे कारणं वाच्यम्॥९॥ क्रियया-
दिभिश्च पदैः संपदो भवन्तीति दशमं संपद्द्वारम्-( स-
गनउइसंपयाइउ त्ति ) सप्तनवतिसंपदोऽर्थविश्रामस्थानानि
साकल्येन पद्यते परिच्छिद्यतेऽर्थो याभिरिति व्युत्पत्तेः, सं-
गतार्थपदपरूपम् इत्यर्थः। ताश्चैव सप्तसु स्थानेषूच्यन्ते—

" अट्ठ नवट्ठय अ-ट्ठवीस सोलस य वीस वीसामा।
मंगल इरिया सक्क-त्थयाइदंडेसु सगनउई " ॥१॥

तुशब्दो नामस्तवादिषु प्रायो विशेषार्थपरिच्छेदार्थ, परिच्छे-
दाभावेऽपि संगतपदत्वेन-" पायसमा ऊसासा " इति-
वचनाच्च सामान्येन संपदो विश्रामस्थानानि ज्ञेयानीति
विशेषयति॥१०॥ संपदश्च दण्डादिका अत एकादशं दण्ड-
कद्वारम्-(पणदंड त्ति) यथोक्तमुद्राभिरस्खलितं भण्यमानत्वात्
दण्डा इव दण्डाः, सरला इत्यर्थः। ते चात्र पञ्च शक्रस्तवादयः।
प्रतिपादयिष्यति च-"पण दंडा सक्कत्थय" इत्यादि। यदत्र
वन्दनाया एव दण्डकाः परिज्ञापिताः नान्येषां, तदस्या एवात्र मु-
ख्यतया प्रस्तुतत्वादिति। एवमधिकारादिष्वपि वाच्यम्॥११॥
दण्डकेषु चैकद्व्यादिका अर्थाधिकाराः सन्तीति तत्सङ्ख्याख्यापकं
द्वादशमधिकारद्वारम्-(बारसऽहिगार त्ति) अधिकारा भावा-
र्हदाद्यालम्बनविशेषव्यानानि,ते च द्वादश दण्डकपञ्चके भवन्ति।
अभिधास्यति च-"दो इग दो दो पंच य" इत्यादि॥१२॥ अधि-
काराश्चाधिकार्यविनाभाविनः, आधेयाभावे आधारव्यपदेशाभा-
वात्, घृताद्यभावे घृतघटादिव्यपदेशाभाववत्। अतोऽधिका-
रिण आलम्बनापरपर्याया अत्र ज्ञेयास्ते च द्विधा,वन्दनीयस्मरणी-
यभेदात्। तत्र प्रथमं सामान्यतः सकलवन्दनीयप्रतिपादकं त्र-
योदश वन्दनीयद्वारम्-(चउवंदणिज्ज त्ति) चत्वारो वक्ष्यमाणा
जिनादयोऽत्र वन्दनीयाः प्रमाणार्चाद्यर्हाः। निरूपयिष्यति
च-"चउवंदणिज्ज जिणमुणिसुयसिद्ध त्ति" ॥१३॥ अधिका-
रप्रस्तावादेव चतुर्दशं स्मरणीयद्वारम्-( सरणिज्ज त्ति ) स्म-
रणीयाः क्षुद्रोपद्रवविद्रावणादितद्गुणानुचिन्तनाविनोपबृं—
हणीयाः; सूचनीया इति यावत्। यद्वा-स्मरणीयाः प्र-
मादादिना विस्मृतं तत्करणीयं तत् तत् सङ्घादिकार्यं च ज्ञाप-
नीयाः। अथवा-सारणीयाः प्रभावनार्हाः। तत्र हि ते कार्ये प्रव-
र्तनीयाः,ते चात्राधिकारितया सम्यग्दृष्टयो देवा ज्ञातव्याः,तेषा-
मेव स्मरणाद्यर्हत्वात्। अर्हदादीनां तु वन्दनीयत्वेन प्रागुक्तत्वात्
स्मारणादिकर्तृत्वाच्च। भणिष्यति च-"इह सुरा य सरणिज्ज त्ति"
॥१४॥ एवं च सामान्येनाधिकारिण उक्ता इति विशेषत-
स्तदभिधानार्थं पञ्चदशं जिनद्वारम्-( चउह जिणा त्ति )। अथ-
वा जिनादयोऽत्र वन्दनीया इत्युक्तम्, जिनाः कतिविधा इति
तद्भेदाभावकं पञ्चदशं जिनद्वारम्-( चउह जिण त्ति ) जिना
दुर्वाररागाद्यन्तरवैरिवारजेतारः, ते च चतुर्धा वक्ष्यमाणना-
मजिनादिभेदेन चतुःप्रकाराः। वक्ष्यति च-" चउह जिणा
नाम " इत्यादि ॥१५॥

चउरो थुई निमित्त-ऽट्ठ बार हेऊ य सोल आगारा।
गुणवीस दोस उस्स-ग्गमाण थुत्तं च सगवेला॥

जिनादयः स्तुत्यादिभिः स्तूयन्ते इति जिनद्वारानन्तरं षो-
डशं स्तुतिद्वारम्। सङ्घा०। ( ताः कति दीयन्तेऽत्र विचा-

रोऽस्मिन्नेव शब्देऽग्रे करिष्यते ) कायोत्सर्गानन्तरं स्तुतयो दीयन्त इत्युक्तम् । अथोत्सर्गा एवात्र किमर्थं क्रियन्त इति तत्फलनिरूपकं सप्तदशं निमित्तद्वारम्-(निमित्तऽट्ठ त्ति) निमित्तानि प्रयोजनानि, फलानीति यावत् । अष्टौ अष्टसङ्ख्यानि, इदमत्र हृदयम्-संपूर्णायामस्यां क्रियमाणायां पापक्षपणादीन्यष्टौ फलानि भवन्तीति । प्रतिपादयिष्यति च-" पावक्खवणत्थमिरिया " इत्यादि । यदत्रैर्यापथिक्या अपि फलमुपादर्शि तदीर्यापथिकीप्रतिक्रमणपूर्विकैव परिपूर्णचैत्यवन्दनेति प्रतिपादनार्थम् । एवं तद्वन्तुप्रमाणवर्णादीनामपि निरूपणे कारणं वाच्यम् ॥ १७ ॥ फलाष्टकार्थं कायोत्सर्गाः कार्या इत्युक्तानि, तत्र न कारणमन्तरेण कार्यप्ररोहसंभावना, बीजेन विनाऽङ्कुरप्रादुर्भावाभाववदिति निमित्तद्वारानन्तरमष्टादशं हेतुद्वारम्-( चार हेऊ य त्ति ) हेतवश्च फलसाधनयोग्यानि कारणान्यत्र वक्ष्यन्ते । यथा-" तस्स उत्तरीकरणे " इत्यादि । चशब्दो निमित्तहेतुभिः कश्चित्कथंचन कतिचिन्मन्यत इतिवाचनान्तरप्रदर्शनार्थः । तच्चाग्रे दर्शयिष्यते । इति निमित्तहेतुभिः कृतोऽप्युत्सर्गो नाकारैर्विना निरतिचारः शक्यः पालयितुमित्याकारद्वारमेकोनविंशतितमम्-( सोल आगार त्ति ) षोडश आकारा अपवादाः कायोत्सर्गकरणे ज्ञातव्याः । वक्ष्यति च-" अनुच्छयाइ वारस " इत्यादि ॥१९॥ कृते चोत्सर्गे दोषा वर्ज्या इति विंशतितमं दोषसंख्याद्वारम्-( गुणवीस दोस त्ति ) एकोनविंशतिर्दोषाः कायोत्सर्गस्य वर्जनीयाः । अभिधास्यति च-" घोडगलय " इत्यादि ॥ २० ॥ कियन्तं च कालमयमुत्सर्गः कार्य इत्येकविंशं प्रमाणद्वारम्-( उस्सग्गमाणु त्ति ) कायोत्सर्गप्रमाणमत्र ज्ञेयम् । वक्ष्यति च-" इरिओस्सग्गपमाणं " इत्यादि ॥ २१ ॥ चैत्यवन्दना हि स्तुतिस्तवादिस्वरूपा, तत्र स्तुतयो वन्दनामध्ये दीयमानत्वात् तद्द्वारं षोडशमुक्तम् । स्तवस्तु वन्दनापर्यन्तभावी, " चेइयाइं वंदिज्जंति, तओ पच्छा संतिनिमित्तं अजियसंतित्थओ परियट्टिज्जइ । " इत्यावश्यकचूर्णिवचनात्, तथैव सकलसङ्घेन क्रियमाणतया करणविधौ समायातत्वाच्च । तथा आवश्यकवृत्तावप्युक्तम्-" चेइआइं वंदिज्जंति, तओ संतिनिमित्तं अजियसंतित्थओ कड्डिज्जइ " इत्यतो द्वाविंशं स्तवद्वारम्-( थुत्तं ति ) स्तोत्रं चतुःश्लोकादिरूपम्-" चउसिलोगाए परेण थओ भवइ " इति व्यवहारचूर्णिवचनात् तदत्र भणनीयम् । वक्ष्यति च-" गंभीरमहुरसद्दं " इत्यादि । चशब्दो विशेषकः । तेनात्र एकैकश्लोकादिकं भगवद्गुणोत्कीर्त्तनपरं चैत्यवन्दनाथाः पूर्वं भण्यते, ततो मङ्गलवृत्तापरपर्याया नमस्कारा इत्युच्यन्ते । यद्भाष्यम्-

" अट्ठसयवियाल-त्ति उत्तं पढिऊण सुकइबद्धाइं ।
मंगलवित्ताइं तओ, पणिवायथयं पढइ सम्मं ॥१॥ "

इति पूर्वं भणनीयत्वादेव नमस्काराणां तद्द्वारं पूर्वं सप्तममुक्तम् । यत्तु कायोत्सर्गानन्तरं भण्यते तत स्तुतय इति रूढाः, चैत्यवन्दनापर्यन्ते च स्तोत्रमिति, अयमेव चैतेषां परस्परं विशेषः; अन्यथा भगवत्कीर्त्तनरूपतया सर्वेषामप्येषामेकस्वरूपापत्तेः । भणितं चागमे त्रितयमप्येतत्-नमस्कारस्तुतिस्तवा इति । तथा चोत्तराध्ययनसूत्रम्- 'थयथुइमंगलेणं भंते ! जीवे किं जणयइ ? । थयथुइमंगलेणं नाणदंसणचरित्तबोहिलाभं च जणयइ । नाणदंसणचरित्तसंपन्ने जीवे अंतकिरियं कप्पविमाणोववत्तिअं आराहणं आराहेइ । " इत्यादि विमर्शनीयमिदं सूक्ष्ममधियेति ॥ २२ ॥ इयं च चैत्यवन्दना दिनमध्ये कियन्तो वारानेयतो विधेयेति वेलाप्रमाणप्ररूपकं त्रयोविंशतितमं द्वारम्-( सगवेल त्ति ) सप्तवेलाः सप्तवारान् दिनान्तरालवतोऽपि वन्दना कार्येति । कथयिष्यति च-" पडिकमणे चेइयजिणमचरिम " इत्यादि ॥ २३ ॥

दसआसायणचाओ, एवं चिइवंदणाइठाणाणि ।
चउवीसदुवारेहिं, दुसहस्सा हुंति चउसयरा ॥

चैत्यवन्दनं विदधता विशेषत आशातनाः परिहार्या इति चतुर्विंशतितममाशातनाद्वारम्-( दसआसायणच्चाओ त्ति ) दशानामाशातनानाम्-

" जिणभवणम्मि अवण्णा, पूयाइअणायरो तहा भोगो ।
दुप्पणिहाणं अणुचिय-वित्ति आसायणा पंच ॥१॥ "

इति बृहद्भाष्योक्ताऽवज्ञादिपञ्चप्रकाराऽऽशातनाऽन्तर्वर्तिभोगाभिधानतृतीयाऽऽशातनाभेदानां ताम्बूलपानीयादीनां,त्यागः परिहारः कार्यो, जिनगृह इत्युपस्कारः । वक्ष्यति च-" तंबोलपाणभोयण " इत्यादि । एतासां चोपलक्षणत्वात्, तुलादण्डन्यायेन वा मध्यग्रहणेनाऽऽद्यन्तयोरपि ग्रहणाच्चतुरशीत्युत्तरभेदावश्य (?) पञ्चप्रकाराऽप्याशातना वर्ज्येति । एतच्च एतद्द्वारव्याख्याऽवसरे भणिष्यामः । एवं पूर्वोक्तप्रकारेण चैत्यवन्दनायां स्थानानि भवन्तीति योगः । कैः?, चतुर्विंशतिद्वारैः । तत्राद्यगाथायामष्टौ, द्वितीयस्यां सप्त, तृतीयायामष्टौ, चतुर्थ्यामेकं द्वारमिति । कियन्ति स्थानानि भवन्तीत्याह-द्वौ सहस्रौ चतुःसप्तत्यधिकौ । तत्राद्यद्वारे त्रिंशत्, द्वितीये पञ्च, तृतीये द्वौ, चतुर्थे त्रीणि, पञ्चमे त्रीणि, षष्ठे एकम्, सप्तमे एकम्, अष्टमे षोडशशतानि सप्तचत्वारिंशदधिकानि, नवमे एकाशीत्यधिकं शतम्, दशमे सप्तनवतिः, एकादशे पञ्च, द्वादशे द्वादश, त्रयोदशे चत्वारि, चतुर्दशे एकम्, पञ्चदशे चत्वारि, षोडशे चत्वारि, सप्तदशे अष्टौ, अष्टादशे द्वादश, एकोनविंशतितमे षोडश, विंशतितमे एकोनविंशतिः, एकविंशतितमे एकम्, द्वाविंशतितमे एकम्, त्रयोविंशे सप्त, चतुर्विंशतितमे दश । सर्वे मिलिताश्चतुःसप्तत्यधिकसहस्रा भवन्तीति द्वारगाथाचतुष्टयार्थः । सङ्घा० १ प्रका० ।

( २ ) दश त्रिकाणि-

अथ "यथोद्देशं निर्देशः" इति न्यायात् प्रथमं द्वारं व्याचिख्यासुः दशत्रिकप्रोचकटयिषया शास्त्रप्रसिमुख्यरूपाणि प्रतिद्वाराणि चिरन्तनगाथाद्वयेनाऽऽह-

तिन्नि निसीही तिन्नि य,पयाहिणा तिन्नि चेव य पणामा ।
तिविहा पूया य तहा , अवत्थतियभावणं चेव ॥

तिस्रो नैषेधिक्यो गृहादिव्यापारपरिहाररूपाः, जिनगृहादिस्थाने प्रविशता कर्त्तव्या इति क्रियाऽध्याहारः। एवमन्यत्रापि-"यश्च निम्बं परशुना, यश्चैनं मधुसर्पिषा। यश्चैनं गन्धमाल्याद्यैः, सर्वस्य कटुरेव सः ॥१॥ " इत्यादिवद् यथाऽनुरूपा क्रियाऽध्याहार्येति प्रथमं त्रिकम् ॥१॥ तिस्रश्च प्रदक्षिणा दातव्याः,तत्र प्रकर्षेण सर्वासु दिक्षु विदिक्षु च परिभ्रमतो दक्षिणमात्मनो दक्षिणाङ्गभागवर्त्ति मूलबिम्बं ज्ञानादित्रयानुकूल्यकृते यत्र प्रतिपत्तौ सा प्रदक्षिणेति द्वितीयं त्रिकम् ॥ २ ॥ त्रयश्च प्रणामाः प्रकर्षेण

शीर्षादिना भूस्पर्शादिलक्षणेन नामा नमनानि प्रह्वीभावा जिनस्याग्रे विधेयाः, नमस्कारकरणकाले भक्त्यतिशयख्यापनार्थं त्रीन् वारान् शिरोनमनादि विधेयं,न त्वेकमपि वारमित्येवशब्दो नियुक्तः । यदागमः-" तिक्खुत्तो मुद्धाणं धरणितलंसि नमेइ" त्ति ॥ ३ ॥ शिरसा त्रिर्भूमिं स्पर्शयतीत्यर्थः । चकः चशब्दः समुच्चये, द्वितीयस्तु विशेषणे । स चैकाङ्गादिकमपि प्रणामं कुर्वद्भिर्नमस्काराशीशिरःप्रभृतिष्वपि सर्वत्र शिरःकराञ्जल्यादि त्रिःपरावर्तनीयमिति विशिनष्टि । एवं च-"पणिवाओ पंचंगो " इत्यप्युच्यमानं न विरुध्यते , प्रणिपातभेदाङ्गव्यक्तिख्यापनपरत्वात्तस्याः । यद्वा-भूमौ जानुन्यासशिरःस्पर्शशिरोऽञ्जलिकरणरूपाः त्रयः प्रणामाः शक्रस्तवादौ विधेयाः । उक्तं च-" वामं जाणुं अंचेइ " इत्यादि । अथवा-अञ्जलिबन्धोऽर्धावनतता, पञ्चाङ्गश्चेति त्रय एव वक्ष्यमाणलक्षणाख्यः प्रणामा इति तृतीयं त्रिकम् ॥३॥ त्रिविधा च त्रिप्रकारा अङ्गाग्रभावाऽऽत्मिका पुष्पामिषस्तुत्यादिनिर्माल्यस्वभावा पञ्चप्रकाराऽष्टप्रकारसर्वप्रकाररूपा वाऽत्रैव वक्ष्यमाणस्वरूपा पूजाऽर्चा विधेया।तथेत्यागमादुक्तनीत्या तदुक्ताशेषतत्पूजाजन्दानाम्नात्तर्जातरूपया । उक्तं चैत्यचूर्णौ-"तिविहा पूया पुप्फेहिं नेवज्जेहिं थुईहिं, सेसभेया इत्थ चेव पविस्संति त्ति "। यद्वा-तथेति " सयमाणयणे पढमा " इत्यादिस्थानान्तराप्रसिद्धाऽनेकधा पूजात्रयाणां व्यापकः, तानि चाग्रे दर्शयिष्यामः । इति चतुर्थं त्रिकम् ॥ ४ ॥ अवस्थात्रिकस्य छद्मस्थकेवलिसिद्धत्वरूपस्य, भावनं पुनः पुनश्चिन्तनं, "भावेयइ उयातिगान्तरमिति" वचनात् । पिण्डस्थपदस्थरूपातीतध्यानकृते कर्त्तव्यमेवेति. एवशब्दोऽवधारयति । तथैव पिण्डस्थादिध्यानासिद्धेस्तदर्थत्वाच्च सर्वस्याऽपि सद्धर्मानुष्ठानोपक्रमस्य, रूपस्थध्यानं तु दर्शनमात्रादपि सिद्ध्यति । उक्तं च"-पश्यति प्रथमं रूपं, स्तौति ध्येयं ततः पदैः । तन्मयः स्यात्ततः पिण्डे, रूपातीतः क्रमाद्भवेत् ॥१॥" इति पञ्चमं त्रिकम् ॥ ५ ॥

तिदिसिनिरिक्खणविरई, पअभूमिपमज्जणं च तिक्खुत्तो ॥

वन्नाइतियं मुद्दा-तियं च तिविहं च पणिहाणं ॥

तिसृणामूर्ध्वाधस्तिर्यग्रूपाणां वामदक्षिणपाश्चात्यलक्षणानां वा दिशां, निरीक्षणस्यालोकस्य विरतिर्वर्जनं, विरूपात् । तत्रानुपयोगे वन्दनस्यानादरतादिदोषप्रसङ्गात्, यस्यां दिशि तीर्थकृद्बिम्बं तत्संमुखमेव निरीक्षणीयमित्यर्थः । यदागमः-" भवणेक्कगुरुजिणिंदपडिमासु विणिवेसियनयणमाणसेण० जाव चेइए वंदियव्वे " षष्ठं त्रिकम् ॥ ६ ॥ पदभूमेर्निजचरणन्यासभूमेः , सत्त्वादिरक्षार्थं सम्यग् चक्षुषा निरीक्ष्य प्रमार्जनं च त्रिः-त्रीन् वारान् कुर्यात् । उक्तं आगमे-" अह तिन्नि वारा उ चलणाण हिट्ठिमं भूमिं न पमज्जिज्जा, तो पच्छित्तं " इति सप्तमं त्रिकम् ॥ ७ ॥ वर्णादित्रिकं चैत्यवन्दनागतलक्षणाथांक्षरत्रयरूपया परिज्ञानं सम्यगुच्चारचिन्तनात्रयेण पदपदकाग्रता मनसाऽऽलम्बनयन् । इत्यष्टम त्रिकम् ॥ ८ ॥ मुद्राणां हस्ताद्यङ्गविन्यासविशेषलक्षणानां त्रयं च योगमुद्राजिनमुद्रामुक्ताशुक्तिमुद्रात्मकं सूत्रपाठसमकभावितया मूलमुद्रात्रयरूपं समस्तप्रत्यूहव्यूहव्यपोहार्थं,सकलसमीहितसंपादनार्थं च,यथा महामान्त्रिका मन्त्रादि स्मरन् वज्रमुद्राङ्कुशमुद्रादिका मुद्राः प्रयुङ्क्ते , तथा चैत्यवन्दनासूत्रोच्चारावसरेऽवश्य सत्यापनीयता वा ज्ञातव्यम् , तदविनाभावित्वात्सूत्रोच्चारस्य , "पंचमदंडो इ जोगमुद्दाए " इत्यादिवचनात् । इदश्च समुद्रं सूत्रपाठोऽन्यत्राऽपि मन्त्रभेदादौ, परममन्त्रभेदादिकल्पं च सर्वं जिनागमसूत्रम्।"कस्स वि स परममंतो" इति "अट्ठारस पयसहस्सी वेओ " इत्यादिवचनात् अर्द्धासमुद्राप्रणामिमुद्रादयस्तु अत्र परिज्ञाताः, उत्तरमुद्रारूपत्वात्तासामनियतत्वात्, सूत्रपाठसमं अनुपयुज्यमानत्वात् , तथाऽनुक्तत्वात् । सूत्रोच्चारकालात्पूर्वं परकालजावित्वाद्विनयविशेषदर्शनमात्रफलत्वाच्चेत्यादिवदू अपरिक्रियमिति नवमं त्रिकम् ॥ ९ ॥ त्रिविधं च त्रिभेदं चैत्यवन्दनामुनिवन्दनाप्रार्थनाभेदात् प्रणिधानं, चैत्यवन्दनाऽवसाने विदध्यादिति शेषः तथा चागमः-"वंदइ नमंसइ" त्ति सूत्रस्य वृत्तिः-वन्दते ताः प्रतिमाश्चैत्यवन्दनाविधिना प्रसिद्धेन नमस्करोति पश्चात्प्रणिधानादियोगेनेति दशमं त्रिकम् । इति प्रतिद्वारगाथाद्वयसमासार्थः ॥ १० ॥ उक्तो दशत्रिकाद्वारार्थः । संघा० १ प्रस्ता० । प्रव० । दर्श० ।

( ३ ) नैषेधिकीत्रयम् । अथ भावार्थं वक्ष्यते-तत्र प्रथमं नैषेधिकीत्रिकं भावयन् प्रासङ्गिकदाह-

घरजिणहरजिणपूजा-वावारच्चायओ निसीहितिगं ।

अग्गद्दारे मज्झे, तइया चिइवंदणासमए ॥

गृहं च मन्दिरम्,उपलक्षणत्वादापणादिपरिग्रहः।जिनगृहं च देवगृहम्, जिनपूजा च पुष्पादिभिर्जिनाऽभ्यर्चनं, तेषां व्यापारस्तत्कृतकार्यकारणचिन्तनादिलक्षण आरम्भः,तस्य त्यागाद्वर्जनाद् नैषेधिकीत्रयं पूर्वोक्तशब्दार्थं, यथार्थनामकं भवतीति गम्यते।तत्र प्रथमा नैषेधिकी-अग्रद्वारे वलानकप्रवेशसमयं विधेया । द्वितीया तु मध्ये मुखमण्डपादौ । तृतीया पुनश्चैत्यवन्दनाविधानसमये । इत्यक्षरार्थः । भावार्थस्त्वयम्-जिनभवनादिषाहिर्भूतगृहहट्टादिगतक्रयविक्रयादिव्यवहाररूपसावद्यारम्भविधानानिषेधनिष्पन्ना प्रथमा नैषेधिकी, सा चाग्रद्वारे जिनभवनवलानके वक्ष्यमाणपञ्चविधाऽभिगमविधानपुरस्सरं प्रविशता भुवनमल्लनरेन्द्रवत्कार्या सा । यदुक्तं भाष्ये-

" पंचविहाभिगमेणं, पविसंतो वलाणए निसिहितिगं ।
कुज्जा गिहि वावारं, न काहमिन्हि ति भावितो ॥ १ ॥ "

अत्र मनोवचःकायैर्गृहादिव्यापारो निषेध्य इति ज्ञापनार्थमुक्तम् । ( निसिहि'त्ति कुज्ज त्ति) परमेकैवेषा गण्यते, जिनगृहादिबहिर्जावितैकरूपस्यैव गृहादिव्यापारस्य निषिद्धत्वात् । तथा च लघुभाष्यम्-" तणुवयणमाणसाणं, निस्सीहबितया निसीहियाति त्ति " ।

अत्र भुवनमल्लनरेन्द्रकथानकं चैवम्-

"कुसुमपुरी अत्थि पुरी, बहुजणरयणाहि रयणउरयणं ।
पगहरि भूरिहरिहिँ, परिहवइ अमरनयरि जा ॥ १ ॥
हेमप्पहो हरि व्व, तत्थऽत्थि निवो गवाहिवो स जओ ।
भज्जा य तस्स रंभा, पुत्तो पुण भुवणमल्लु त्ति ॥ २ ॥
सूरो रणम्मि सोमो, नयम्मि चक्को रिउम्मि जो उ बुहो ।
सत्थम्मि मईए गुरू, नीईए कई अयं मंदो ॥ ३ ॥
कइया निवं सहत्थं, विन्नी विन्नवइ देव ! बहिं पगा ।
पुरिसो दट्ठुं इच्छइ, पहुं कहेइ न य सो अप्पं ॥ ४ ॥
मुक्त त्ति निवुत्ते जा, मुक्का पत्तो य रायदिट्ठिपहं ।

ता हसिअ निवो भणई, किं अप्पं करइ ! गोवेसि ॥ ५ ॥
सो भणइ कयपणामो, पहु ! कीरउ मेऽणुयारणं कहो ।
कइ चिरदिट्ठो ओलग्ग-किअओ मि नामं च सरिय मे ॥ ६ ॥
भणइ निवो उवयारी, वीसरसी तुमं जमप्पिया तुमए ।
रम्मा दिव्वे विवाहे, थविय कणयपाउया मज्झ ॥ ७ ॥
इय संभासिय पुट्ठो, आगमणपओअणं निवेण इमो ।
भणइ पहु ! अत्थि सिरिसे-णनिवइधूया रयणमाला ॥ ८ ॥
सा कुंवररयणमाला, सुरयणमाल व्व वरगुणसमेया ।
जो कुणइ राहवेहं, स मे वरो इय कयपयन्ना ॥ ९ ॥
राया तु भुवणमल्लं, इच्छइ स भयाणिसुमं वरं न वरं ।
कुमरीगिरमवमन्नइ, जाणंतो कुमरकोसल्लं ॥ १० ॥
इअ पेसिओ निव ! इहं, ता कुमरो तिव्वयेव पऽविलंबं ।
नियदंसणामयणं, सिरिसेणनरिंदमणनयणे ॥ ११ ॥
नियइ निवो गणयमुहं, तो भ भणइ पवरमज्ज जुत्तदिणं ।
चिंतइ निवो धुवा कुम-रभद्दसेणी सविहलग्गा ॥ १५ ॥

यत उक्तम्-

शुभध्यानान्यविघ्नानि, संभवत्साधनानि च ।
कथयन्ति पुरः सिद्धिं, कारणान्येव कर्मणाम् ॥ १३ ॥
मणपवणसउणपरियण-अणुकूलत्तेण तो भुवणमल्लो ।
चंपापुरीअभिमुहं, चलिओ चउरंगबलकलिओ ॥ १४ ॥
सिद्धत्थपुरसमीवे, जा पत्तो ता नरेहिँ तप्पहुणा ।
विन्नत्तो जह कीरउ, वीर ! सरवणे इहावासो ॥ १५ ॥
तत्थावसिअ कुमारो, नियइ वणं विम्हिओ समंता जा ।
ता पिच्छइ हयमयरइ-सुहरूसमूहं समूहमिलं ॥ १६ ॥
किमियं ति कुमरपुट्ठा, भणंति सिद्धत्थपुरनिवनरा ते ।
न मुणेसु परं संभा-विज्जइ सिरिमूलदेवनिवो ॥ १७ ॥
जं तुम्हागमइत्तणं-समया स मसइ खणं पि ।
वरिससमं ति इमे जा, कहंति ता विन्नवइ विन्नी ॥ १८ ॥
सिद्धत्थपुरनिवो पहु !, नयरजिओ पयाहिँ पइ त्ति ।
तो कुमरो अत्थइ जा, पत्तो ता स झ त्ति तहिं ॥ १९ ॥
अइरूवविजियमारं, दट्ठु कुमारं घस त्ति धरणियले ।
मुच्छावसा स पडिओ, हा हा सद्दो पुणुच्छलिओ ॥ २० ॥
कुमरेण ससंभममह, चंदणसेयाइणोवयारेण ।
संलद्धचेयणो किं, बाहइ तुम्हं ति सो पुट्ठो ? ॥ २१ ॥
मोणयवयणो न देइ, उत्तर नियइ बहिरदिट्ठीए ।
कंडूअइ स य कन्नं, पायंगुट्ठेन लिहइ भुवं ॥ २२ ॥
किमियं ति कुमरपुट्ठो, सिरिसेहरमंतिनंदणो सीहो ।
कुमरवयं सो साहइ, पहु ! इह न मुणिज्जइ किं पि ।
नवरं इओ अदूरे, गम्मिज्जउ देव ! जेण वरणाणी ।
सिरिअजयघोससूरी, समागओ अत्थि इह जो उ ॥ २४ ॥
मेरु व्व महियजलही, सूरो विव निहयविलमतक्खरणो ।
दोसुम्मूलणरसिओ, रवि व्व हाक व्व पवरगुणो ॥ २५ ॥
सव्वपरिग्गहरहिओ, विरइयसारगसंगहो सययं ।
विहियसयलक्खविजओ, पगसंसारभयभीओ ॥ २६ ॥
तो कुमरो सो य निवो, गंतूणं तत्थ नमिय सूरिपए ।
उवविसइ उचियठाणे, तो सिरि कहइ इय धम्मं ॥ २७ ॥
लहिउं सुदुल्लहं पुर-भवाइसामग्गिमित्थ भवहरए ।
सद्दंसणपरिन्नट्ठा, मा बुड्डिया भमइ कुम्म व्व ॥ २८ ॥
हरपरिमियसणा अवि, लहिज्ज ससिदंसणाइ सो कुम्मो ।
न उ पुण वि जओ बोहिं, भवऽणंतत्ता अकयसुकओ ॥ २९ ॥
ता मोतुमिमं सम्मं, अरिह देवो सुसाहुणो गुरुणो ।
जिणपण्णत्तं तत्तं, इत्थ पहाणं ति कुणइ मई ॥ ३० ॥

भणियं च—

मुत्तूण जिणं मुत्तू-ण जिणमयं जिणमए वि ए मुत्तुं ।
संसारकच्छभारं, चिंतिज्जं तं जगं सेसं ॥ ३१ ॥
सद्दंसणसुद्धिकए, कायव्वा वंदणा जिणाण सया ।
तिनिसीहाईदसगं, तत्थ य नेयं जहा विहिणा ॥ ३२ ॥
अह भणइ भुवणमल्लो, भयवं ! कह मुच्छिओ ममं दट्ठुं ।
स मयणरमणिवियारे, कहं व पुरिसो वि कुणइ इमो ? ॥ ३२ ॥
भणइ गुरू भद्द ! पुरा, सीहपुरे आसि रयणसारनिवो ।
गंग व्व सुई सुदया, तस्स पिया मयणरेह त्ति ॥ ३४ ॥
आलियविलीयविरत्ते, कइआइ निवम्मि साऽणुरत्ता वि ।
उव्वंधऊण मया, अवमाणदुहं असहमाणा ॥ ३५ ॥

अओ—

अलियावयायअभिदू-मीययजीवस्स सुद्धहिययस्स ।
होइ वहं तस्स पुणो, चंदणरससीयलोऽग्गी वि ॥ ३६ ॥
देवच्चणदाणदया-इसुहभावा उ सा इहुप्पन्ना ।
सिद्धत्थपुरे सुंदर-निवधूआ मूलनक्खत्ते ॥ ३७ ॥
अह सहसा कालगओ, राया जं मे इमीइ तो कुणई ।
सुमइअमच्चो पयडिय-पुत्तत्तं रज्जअभिसेयं ॥ ३८ ॥
मरिऊण रयणसारो, जाओ सि तुम इहागए दिट्ठे ।
परपुव्वजम्मजाया, पई पए सरिउ नहो ॥ ३९ ॥
किं मह इमम्मि पीई, एवं ति इमइ विमरिसंतीए ।
जाए जाईसरणे, तं जायं जं तए पुट्ठं ॥ ४० ॥
भुत्तं संसारसुहं, नाडं दइयस्स नेहपरिणामो ।
दिट्ठो मालवदेसो, लद्धा मेरा य अग्घाणा ॥ ४१ ॥
इइ भणइ मूलदेवो, मुणिवइवयणा उ जायवेरग्गो ।
पडिवज्जइ पव्वज्जं, रज्जं दाउं कुमारस्स ॥ ४२ ॥
कुमरो पुण संमत्तं, गिण्हइ चिइवंदणाइनियमजुयं ।
अह गुरुणा गुरुकरुणा-परेण एवं स अणुसिट्ठो ॥ ४३ ॥
लब्भंति सुरसुहाइं, लब्भंति नरिंदपवररिद्धीओ ।
न उणो सुबोहिरयणं, लब्भइ मिच्छत्तमहरयणं ॥ ४४ ॥
जह गहगणाण गयणं, आहारो रोहणो य रयणाणं ।
सिंधूण जहा जलही, तह सयलगुणाण संमत्तं ॥ ४५ ॥
जह उवसमो मुणीणं, चाउव्विहविणयसीलमित्थीणं ।
तह सम्मत्तं गिहिणो, जइणो वि विजुलयं परमं ॥ ४६ ॥
ता मा कासि पमायं, सम्मत्ते सव्वदुक्खनासणए ।
जं सम्मत्तपइट्ठा-इं नाणतवविरियचरणाइं ॥ ४७ ॥
इत्थं ति भणिय कुमरो, तो मंतो कयत्थमप्पाणं ।
बहु बहुमाणं नमिउं, गुरुपयपउमं गओ सिबिरं ॥ ४८ ॥
सिद्धत्थपुरं गंतुं, सुमइअमच्चं तहिं ठविय रज्जे ।
चलिओ पुरओ पत्तो, अडविं कालिंजरं जाओ ॥ ४९ ॥
सम्माणिघायमज्जं-तमत्तमायंगविंयडकुंजयडा ।
विलसिरसकुंतसरच्छ-क्कवायया संगरधर व्व ॥ ५० ॥
तत्थ दससजोअणंते, आवासो य जाव वरुणनइतीरे ।
कुमरो नियइ वणाइं, ता पिच्छइ रिसहजिणभवणं ॥ ५१ ॥
तो तत्थ निसीहितियं, काउं जा पविसइ नियइ ताव ।
जिणपूयणावद्धाओ, अमरीओ भत्तिनमिराओ ॥ ५२ ॥
अह दट्ठुं निरुवमिमं, कणगमयं रिसहसामिणो पडिमं ।
कुमरो वियसियनयणो, वंदिअ विहिणा थुणइ एवं ॥ ५३ ॥

विश्वत्रयैकदर्शन !, सहस्रदर्शनमतक्रम ! जिनेन्द्र ! ।
सवणंतपत्तदंसण !, अणंतदंसण ! चिरं जयसु ॥ ५४ ॥
पूर्वाकृतसुकृतानां, पूर्वाशीलितविशुद्धशीलानाम् ।
अविहियतवाण पुव्विं, न होइ तुह दंसणं चेव ॥ ५५ ॥
भवशतकृतमपि पापं, त्वद्दर्शनतो विलीयते नाथ ! ।
पिरीभूअं पि घयं, तुअं जहा जलिरजलणाओ ॥ ५६ ॥
समवोऽयमेव शस्यः, सलक्षणोऽसौ क्षणस्तदहरनघम् ।
पक्खो च्चि सो सपक्खो, जयबंधव ! दीससे जत्थ ॥ ५७ ॥
न्यूनमदृष्टे वाञ्छा, दृष्टे त्वयि नाथ ! विरहजं दुःखम् ।
इय जइ तुहा वि न सुहं, तहा वि तुह दंसणं होउ ॥ ५८ ॥
पूर्वार्जितसुकृतकृतं, प्राविशुभनिबन्धनं हरति चैनः ।
इय कालत्तयसुहयं, जिणाण तुह दंसणं दुलहं ॥ ५९ ॥
स्वामिन् ! स्वद्दर्शनं कुरु, तथा यथा स्यात्पुनर्न तदभावः ।
जच्चंधवेयणाओ, चक्खुक्खयवेयणा दुसहा ॥ ६० ॥
नामाऽपि नाथ ! यस्ते, परमन्त्रसधर्म कीर्तयति तस्य ।
मिच्छादंसणदोसो, लहु नासइ किं परं भणिमो ? ॥ ६१ ॥
य इति जिन ! त्वामन्यू-नदर्शनान्यूनदर्शनं नौति ।
स विशुद्धदर्शनः श्रय-ति सत्वरं सर्वदर्शित्वम् ॥ ६२ ॥
इय थोउं चेइयं जा, सविम्हयं नियइ सव्वओ कुमरो ।
ता पिच्छइ पच्छिमदिसि, कमललललामं च पुक्खरिणिं ॥ ६३ ॥
गंतुं तत्थ जलेणं, महुरेणं सीयलेण विमलेणं ।
गुरुवयणेण व अप्पं, सोहिय जा विस्समइ सुत्थो ॥ ६४ ॥
ता गुंजाहलहारो, सललइलाखाकरो हसियनिहो ।
एगो समागओ त-त्थ वानरो वानरीजुत्तो ॥ ६५ ॥
स मणुयगिराइ कुमरं, पणमिय भणइ पहु ! असरणसरण ! ।
सुरय ! पवरसुदक्खिण, ! कुमर ! मह सुणसु विन्नत्तं ॥ ६६ ॥
इह अडवीइ लया वि हु, वानरजूहाहिवत्तमासी मे ।
एसा उ वल्लहा तइ, पाणेहि वि वल्लहा निच्चं ॥ ६७ ॥
तं मह जूहं इण्हि, वणंतरगयस्स वानरेण बला ।
अवहरिअं अन्नेणं, तं तु समत्थो न्नि णिग्गहिउं ॥ ६८ ॥
नवरं न देइ मह ते-ण जुज्झिउं नेहकायरा एसा ।
अहमवि इमं न सक्के-मि इत्थ एगागिणिं मुत्तुं ॥ ६९ ॥
संपइ तुमं महायस !, मणनयणूसवकरो सुबंधु व्व ।
परउवयारिक्कपरो, दिट्ठो पुण्णोदएण मए ॥ ७० ॥
ता जाव अहं रिउवा-नरं लहुं निहणिऊण एमि इहं ।
ता नेहभीरु एसा, निरुद्धवा ठाउ तुह पासे ॥ ७१ ॥
इय भणिय लहुं मुत्तुं, गओ इमो चिंतए तओ कुमरो ।
कह मणुअगिरा एसो, वयइ पवक्ख इव मईपुव्वं ॥ ७२ ॥
बलिअरिउणा पियं जा, निहयं न सुणामि ता मम च्चि जुत्तं ।
मरण त्ति भणिय कुमर-स्स वानरी पडइ वाविं तो ॥ ७३ ॥
न हु मह इमीइ सरणा-गयाइ मरणं उविक्खिउं उचिअं ।
इय ताइ कड्ढणत्थं, झंपावइ तत्थ जा कुमरो ॥ ७४ ॥
तावन्न वावि न जलं, न वानरी तत्थ किं तु अप्पाणं ।
वरमणिमयपासाए, पल्लंकगयं नियइ कुमरो ॥ ७५ ॥
अह अ नियंता कुमरं, जिच्चा गंतु कहंति मंतीणं ।
ते वि हु सन्निहियबला, तं कयजत्ता गवेसंति ॥ ७६ ॥
आगरुमनाग एगो, अह कुमरं पइ पयंपइ इहं भो ! ।
मा किं पि चिंतियऽन्नं, कारणओ तं मयाऽऽणीओ ॥ ७७ ॥
को सं किमाणिओ हं, इय कुमरुत्ते नरो भणइ सुणसु ।
अभिभगई असुरोऽहं, कीलाभवणं च मह एयं ॥ ७८ ॥

कइआ दइआसहिओ, उज्जिंते समये केवलिं नंतुं ।
चलिओ निएमि मग्गे, आगिअमिकं मसाणंते ॥ ७९ ॥
रत्तंदणकयतिलयं, परिहियमिगचम्मचित्तयच्छुप्पं ।
कसिणाहिजोगवट्टं, मिहहत्तं गरुयहुंकारं ॥ ८० ॥
तस्सऽग्गे जलिरानिल-कुंडं वामम्मि कन्नगं चेव ।
रुयमाणिं रत्तं-दणलित्तं कणवीरमालिअं ॥ ८१ ॥
तं जा खिविही जलणे, स मए ता तज्जिओ अरे पाव ! ।
असमंजसमिअ काउं, कत्थिएहि वच्चसि इयास ! ॥ ८२ ॥
तो सो भीओ कन्नं मुत्तुं, नट्ठो दया इमे मुक्को ।
पत्तो अहं पि रेवय-गिरिम्मि तं वालिअं गहिउं ॥ ८३ ॥
तत्थ सुरिसुमइकेवलि-मुणिणो कमकमलममलमहं ।
पणमित्ता आसीणो, सुणामि इय देसणं भणइ ॥ ८४ ॥
" कोहो अप्पीइकरो, उव्वेयकरो य सुगइनिद्दलणो ।
वेराऽणुबंधजणणो, जलणो वरगुणगणवणस्स ॥ ८५ ॥
कोहंधा निहणंति य, पुत्तं मित्तं गुरुं कलत्तं च ।
जणयं जणिं च अप्पं, पि निग्घिणा किं न ता कुणंति ॥ ८६ ॥
कोहऽग्गीपज्जलिओ, न केवलं डहइ अप्पणो देहं ।
संताविइ य परं पि हु, पहवइ परजम्मविणासाय ॥ ८७ ॥
ता कोहमहाजलणो, विज्झाययव्वो खमाजलेण सया ।
अन्नह दुसहं दुक्खं, देइ जह इमीइ बालाए ॥ ८८ ॥ "
भयवं कोहवसेणं, इमीइ पत्तं दुहं कहं ति मया ।
पणमिय पुट्ठो स कहे-इ केवली असुर ! निसुणेहि ॥ ८९ ॥
कयमंगलापुरीए, वणिसिट्ठिसुया इ बालविहवाऽऽसी ।
जयसुंदरी त्ति तीसे, भत्तिजुया भायरा पंच ॥ ९० ॥
जिट्ठस्स पुणो भज्जा, न वट्टए तीइ सह सया सम्मं ।
तं परिणावइ अन्नं, कन्नं सा मच्छरिल्लमणा ॥ ९१ ॥
तीइ कयं जं किं पी, दूसइ तह छहइ डुट्ठवयणेहिं ।
गयलज्जा संमुहमु-त्तरं दयइ भाउजाया वि ॥ ९२ ॥
जिणभवणमागयाओ, वि परुप्परांत्रलियभासणेण इमा ।
अन्नाण वी निसीहिय-भंगाइं कुणंति विकहतए ॥ ९३ ॥

जओ—

जो होइ निसिद्धप्पा, निसीहिया तस्स भावओ होइ ।
अनिसिद्धस्स निसीहिय, केवलमित्तं भवइ सद्दो ॥ ९४ ॥
मिहो कहाओ सव्वाओ, जो वज्जेइ जिणालए ।
तस्स निस्सिहिया होइ, इइ केवलिभासियं ॥ ९५ ॥
इय अइवसट्टाओ, परुप्परं दो वि कलहमाणाओ ।
विज्जूए दड्ढाओ, मरिउं, जायाओं वग्घीओ ॥ ९६ ॥
पुव्वब्भासा अन्नु-न्नदंसणा जायतिव्वरोसाओं ।
जुज्झिय मरिउं तत्तो, पत्ताओं तइयनरयम्मि ॥ ९७ ॥
तत्तो उवट्टिय गय-वरम्मि पुव्वभवविहियसुकयवसा ।
भाउज्जायाजीवो, जाया सिरिसुरनिवजाया ॥ ९८ ॥
तीसे गब्भे धुयत्ता-इ नणंदाजिओ उ उप्पन्नो ।
अरई मणसंतावं, उव्वेयं जणइ अइगरुअं ॥ ९९ ॥
विहिएसु वि तप्पाडण-हेउसएसु न जाव सा पडिया ।
तो जाया पयरेउं, मय त्ति दासीए छड्डाविया ॥ १०० ॥
तद्दिवसपसूयाए, तीए पुण अप्पिआएं धूयाए ।
तत्थ य पालिज्जंती, सा बाला वड्ढिया एत्तो ॥ १०१ ॥
कीलंती डिंभेहिं, अहऽन्नया जोगिएण भोलविउं ।
अइरुद्दमंतसाहण-हेउं नीया मसाणे सा ॥ १०२ ॥
जा खिविही सा जलणे, ता तुमए मोइउं इहाणीया ।
इय नाउं भो अप्पा, कसाइयव्वो न थोवं पि ॥ १०३ ॥

भणियं च—

अणथोवं वणथोवं, अग्गीथोवं कसायथोवं च ।
न हु भे वीससियव्वं, थोवं पि हु तं बहुं होइ ॥ १०४ ॥
दासत्तं देइ अणं, अइरा मरणं वणो विसप्पंतो ।
सव्वस्स दाहमग्गी, दिंति कसाया भवमणंतं ॥ १०५ ॥
सा भणइ खरियजाई, भयवं ! सव्वं पि मेऽणुभूयमिणं ।
ता इत्थि कुण करुणं, जहा वि अह होमि निस्सगा ॥१०६॥
भणइ मुणी गिहिधम्म-स्स इत्थि उचिया तुम जओ अत्थि ।
पुव्वकयदेवपूया-इसुकयसंभूयभोगफलं ॥ १०७ ॥

जओ—

देवच्चणेण रज्जं, भोगा दाणेण रूवमसमयं ।
सोहग्गं सीलेणं, तवेण मणवंछिया सिद्धी ॥ १०८ ॥
सा भणइ तुम्ह सच्चं, पच्चक्खं नाह ! नवरि मज्झ कहं ।
अविरयसुराण मज्झ-ट्ठियाइ निव्वहिइ गिहिधम्मो ॥ १०९ ॥
तो केवलिणा भणियं, भद्दे ! कालिंजराइ अडवीए ।
सिरिसिरिसिहनाहभवण-म्मि तुज्झ पूयं रयंतीए ॥ ११० ॥
हेमप्पहरायसुओ, तत्थ समागच्छिही भुवणमल्लो ।
जिणनमणत्थं विहिणा, काउं निस्सीहियातियगं ॥ १११ ॥
तेण समं रज्जसुहं, माणित्ता पालिउं च गिहिधम्मं ।
पडिवज्जिय वयकखं, लहिही अइराऽमरट्ठाणं ॥ ११२ ॥
अह तीए गिहिधम्मे, पडिवन्ने नमिअ केवलिस्स पए ।
इच्छाए णं विहियं, विजयपयम त्ति से नामं ॥ ११३ ॥
अह कुमर ! अज्ज पत्ता, जाव गया चेइयम्मि पूयत्थं ।
ता कयनिसीहियतिगो, जिणनमणत्थं तुमं पत्तो ॥ ११४ ॥
निस्सीहियं कुणंतं, दट्ठुं इमा सूरीहिं भणिय त्ति ।
जो केवलिणा कहिओ, धुवं इमं भुवणमल्लो सो ॥ ११५ ॥
अह ताहिं वाविमुहं, काउं पवंचं तुम इहाऽऽणीओ ।
ता लिह पाणिग्गहणे-ण कुणसु मह पत्थणं सहलं ॥ ११६ ॥
कुमरो भणइ पमाणं, आएसो नवरि गम्मउ बलम्मि ।
न विरहिओ परियणो, दुहेण गमिही खणं पि जओ ॥११७॥
आरोविउं विमाणे, कुमरं सिविरम्मि नेइ जा असुरो ।
ता सहसा सज्जाओ, हट्टं सचिवाइणो बिंति ॥ ११८ ॥
जो हुं पि ता तए जा, हरिओ जेण कुमरो तओ कोह ।
बहयइ बहसज्जा सा-हसस्स दइवं वि न हु किं पि ॥११९॥

यतः-

सर्वैकतानमनसां, स्फुरद्दुर्जयविनेजसाम ।
दैवोऽपि शङ्कते येषां, किं पुनर्मानवो जनः ॥ १२० ॥
इय ते जा साहेया, हुंति सुणंति त्ति ताव अमरगिरं ।
सत्तप्पहाण अवितह-भिहाण जय सिरीभुवणमल्ल ॥१२१॥
परउवयारपरायण, पुरिसेसुं तुज्झ दिज्जए लेहा ।
पसुमित्तस्स वि कज्जे, गणेसि पाणे तिणसमाणे ॥ १२२ ॥
इय सुणिय जायहरिसा, ते ओयरिय विमाणओ कुमरं ।
पणमंति तयं असुरं, देवीसहियं तु तुट्ठमणा ॥ १२३ ॥
तो सो असुरो हिट्ठो, कुमरेण विवाहए तयं धूयं ।
सप्पणयं भणइ तहा, वच्छे सुण मज्झ वयणमिणं ॥ १२४ ॥
निर्व्याजा दयिते ननान्दृषु नता श्वश्रूषु नम्रा भवेः,
स्निग्धा बन्धुषु वत्सला परिजने स्मेरा सपत्नीष्वपि ।
पत्युर्मित्रजने सनर्मवचना, खिन्ना च तद्वेषिषु,
स्त्रीणां संवननं ननुचितमिदं चिन्नौषधं भर्तृषु ॥ १२५ ॥
अमं वि तीइ दुन्नं, असुरो सोपियस्स भुवणमल्लस्स ।
वत्थाभरणाइ बहुं, दाउं पत्तो सठाणम्मि ॥ १२६ ॥
कुमरो वि तओ चलिओ, पत्तो कंपाइ समह कुलंतं ।
सिरिसेणनिवो सोउं, इय चिंतइ हरिसिओ हियए ॥१२७॥
तम्मि कुले उप्पत्ती, सो विणओ तं कलासु कोसल्लं ।
सोको वी पुण पच्छा-रूवगरिमा अत्थ एयस्स ॥ १२८ ॥
अणं लीला इत्थिय, धुवं करिस्सिही राहवेहं ति ।
निव्वुयहियओ राया, कुमरं संठवइ वरभुवणे ॥ १२९ ॥
अह सज्जिअ राहावे-हमंडवे रयणथंभसोहिल्ले ।
मंचोवरि वरसीहा-सणोवविट्ठेसु निवईसु ॥ १३० ॥
कुमरो असुरप्पियए, वरवत्थाहरणभूसियसरीरो ।
परिहारदंसियम्मि, णिवसइ सीहासणे रम्मे ॥ १३१ ॥
इत्तो य रयणमाला, कुमरी सियसिचयसारलंकारा ।
सिविवियारूढा पत्ता, तत्थुवविट्ठा पिउच्छंगे ॥ १३२ ॥
अह सिरिसेणनिवेणं, भणिय भो भो निवा ! निवइपुत्ता ! ।
जो राहमिणं विंधइ, सो कन्नाए इमाइ वरो ॥ १३३ ॥
जा मंडवमज्झे सुदि-ढकणयथंभोवरि अहोवत्ता ।
वरकंचणपुत्तलिया, ठविया तीमिउ हिट्ठम्मि ॥ १३४ ॥
चउ चउ चक्काई दा-हिणेण वामेण वेगभरियाई ।
तेसिं अहो भूमीए, तिल्लजुआ कुंडिया ठविया ॥ १३५ ॥
तत्थ पडिबिंबियाए, पंचालीए अहो निर्यतेण ।
विंधेयव्वा वाम-च्छितारा सावहाणेण ॥ १३६ ॥
तह इह पत्ताण मए, सव्वेसिं खत्तियाण नामाइं ।
भुज्जेसु लिहावेउं, मिम्मयगोलेसु खित्ताइं ॥ १३७ ॥
ठवियाइं ताइं इह सा-यकमंडम्मि संति कडुले ।
अहं पुरोहियस्सो, गोलो किर नीहरइ जस्स ॥ १३८ ॥
सो राहावेहस्सी, अब्भासं कुणइ इय ववत्थ त्ति ।
तत्थ पुरोहियहत्थे, अह पढम गोलए चलिए ॥ १३९ ॥
नाममिम वाइए तह, भवजझनयरीए पहू जस्स अंगरुहो ।
मयरद्धयकुमरो उ-ट्ठिऊण सकरे करेइ धणुं ॥ १४० ॥
पुव्वभणिएण विहिणा, मुक्को वि हु अप्पडिउ अंबरम्मि ।
सुचरणमुणिहियए इव, जाओ मयरद्धयस्स सरो ॥ १४१ ॥
एवं राहावेहं, विहियारंभेसु खत्तिअवरेसु ।
उट्ठेइ भुवणमल्लो, कुमरो इह अवसरे पत्ते ॥ १४२ ॥
सज्जीकयधणुगुणो, अंतरमह लहिय मुक्कअसमसरो ।
राहावेहं साहइ, गंठीभेयं व भव्वजिओ ॥ १४३ ॥
जयतालादाणपरे, जणम्मि कुमरेण हट्ठतुट्ठमणो ।
तो सिरिसेणनरिंदो, परिणावइ रयणमालं तं ॥ १४४ ॥
कयसंमाणे अन्ने, नियनियठाणे निवे विसज्जेइ ।
कुमरो वि कइवि दिवसे, सुहेण तत्थेव ठाऊण ॥ १४५ ॥
सिरिसेणनिवमणुन्नवि-य बहुयपरिवारपणइणीसहिओ ।
पत्तो नियम्मि नयरे, पिऊण पणमेइ पयपउमे ॥ १४६ ॥
भुत्तत्तरं व सीहो, कुमरवयंसो कहइ सव्वं पि ।
रयणी अ जह विसं, ता जाव इहागओ कुमरो ॥ १४७ ॥
धम्मत्थिणा अह निवेण-इय कयाइ सव्वदंसिणो ।
पुट्ठा धम्मं तेहिं उ, कहिए चिंतइ इमं राया ॥ १४८ ॥
अत्थ न विसयविरागो, न संगचाओ जिएसु विणिघाओ ।
किह हुज्ज सो वि धम्मु-त्ति चिंतिउं ते विसज्जेइ ॥ १४९ ॥
कहइ कुमारो इच्छा, धम्मं जइ णाउं ताय ! जइणो वि ।
ता पुच्छय मुणिणो र-क्खियंगिगयसगाजियऽणंगा ॥ १५० ॥

निवआपत्ता तो खि-त्तिणा उ खुड्डो समाणिओ एगो ।
स निवेणुत्तो खुड्डय !, जइ धम्मं मुणसि ता कहसु ॥ १५१ ॥
ता सो अक्खुहियमणो, धम्मरहस्सं इमं ति भणमाणो ।
सुक्कुल्लमद्दिगोलय-जुगं निवओ खिवइ कुड्डे ॥ १५२ ॥

राजा—

खुड्डय ! इय खुड्डुम्मि, धम्मरहस्सं न किं पि बुज्झामो ।

क्षुल्लकः—

नरवर ! ता एगमणो, सुण भणियं जमिह गोलेहिं ॥ १५३ ॥
उल्लो सुक्को य दो छूढा, गोलया मट्टिया मया ।
दो वि आवडिया कुड्डे, जो उल्लो सो वि लग्गई ॥ १५४ ॥
एवं लग्गंति दुम्मेहा, जे नरा कामलालसा ।
विरत्ता उ न लग्गंति, जहा से सुक्कगोलए ॥ १५५ ॥
थिरहिययमणो निवई, मुणिसत्तम ! सुट्ठु उवइट्ठं ।
इय थोऊणं तह नमि-य खुड्डयं तो विसज्जेइ ॥१५६॥
अह बीयदिणे राया, रज्जं दाऊण तिहुयणमल्लस्स ।
सिरिअभयघोसगुरुणो, पासे दिक्खं पवज्जेइ ॥ १५७ ॥
हेमप्पहरायरिसी, दुवालसंगीसु पत्तसूरी उ ।
बोहइ रवि व्व वसुहा-सरसीए भवियसरसिरुहे ॥ १५८ ॥
अह निवइतिहुयणमल्लो, पत्थाविओ चेव विजियरिउमल्लो ।
साहम्मियवच्छल्लं, करेइ वंदइ जिणवंदे ॥ १५९ ॥
पवयणपभावणपरो, तिन्निनीसीहीपमुक्खजुयविहिणा ।
पविसिय चेइहरेसुं, अच्चाओ जिणाण अंचइ ॥ १६० ॥
रहजत्तपत्तसोहं, अट्ठाहियमहमहणीयजणमोहं ।
सयलं पि नियं रज्जं, कुणइ सुराणं पि कयतुज्जं ॥ १६१ ॥
तत्थाऽऽगयहेमप्पह-गुरुणो वयणं सुणो वि कइया वि ।
पुत्तम्मि ठविय रज्जं, विजयपरायाए संजुत्तो ॥ १६२ ॥
पडिवज्जइ पव्वज्जं, निसीहिउं निविहसव्वसावज्जं ।
अब्भसइ दुविहसिक्खं, सो मुणिसीहो तिहुयणमल्लो ॥ १६३ ॥
इच्छा मिच्छा तहका-र आवसी तह निसीहिया पुच्छा ।
पडिपुच्छच्छंदण निमं-तणा य उवसंपया दसमा ॥ १६४ ॥
इय सामायारिपुरो, निसीहिउं सयलअंतरारिबलं ।
तो स निसीहियकिरिओ, सिवं गओ सविजयपरागो ॥१६५॥

श्रुत्वेतिवृत्तमनिवृत्तवरेण्यपुण्य-
पण्याऽऽपणं भुवनमल्लनरेश्वरस्य ।
त्रैकालिकत्रिजगदीशजिनस्य गेहे,
नैषेधिकीत्रिककृतौ कृतिनो ! यतध्वम्" ।१६६। सङ्घा० १ प्रस्ता०।

अथ चक्षानकप्रवेशसमयविहितनैषेधिकीत्रयानन्तरं जिनदर्शने "नमो जिनेभ्यः" इति भणित्वा प्रणामं च कृत्वा सर्वं हि प्रायेणोत्कृष्टं वस्तु कल्याणकामैर्दक्षिणाङ्ग एव विधेयमित्यात्मनो दक्षिणाङ्गभागे मूलबिम्बं कुर्वन् ज्ञानादित्रयाराधनार्थं प्रदक्षिणात्रयं करोति । उक्तं च-

"तत्तो नमो जिणाणं, ति भणिय अद्धोणयं पणामं च ।
काउं पंचंगं वा, भत्तिभरनिब्भरमणेणं ॥ १ ॥
पूअंगपाणिपरि-वारपरिगओ गहिरमहुरघोसेणं ।
पढमाणो जिनगुणगण-निबद्धमंगलथुत्ताइं ॥ २ ॥
करधरियजोगमुद्दो, पए पए पयाहिणरक्खणाउत्तो ।
दिज्जा पयाहिणतिगं, एगग्गमणो जिणगुणेसु" ॥३॥

अपि च-

मुत्तूण जं किंचि वि देवकज्जं, नो अप्पमट्टं तु विचिंतइज्जा ।
इत्थीकहं भत्तकहं विवज्जा, देसस्स रन्नो न कहं कहिज्जा ॥१॥
भक्खाणुवेहं न वइज्ज चक्कं, न जम्मकम्माणुगयं विरुद्धं ।
नालीयपेमुसलुककसं वा, थोवं हियं धम्मपरं लविज्जा ॥२॥
गिहचेइएसु न घडइ, इयरेसु वि जइ वि कारणवसेण ।
तह वि न मुंचइ मइमं, सया वि तक्करणपरिणामं ॥३॥
यथा च चैत्येषु भावार्हत्त्वमारोप्य शक्रस्तवपाठः, पञ्चविधाभिगमश्चेति भावार्हत्प्रतिपत्तिर्विधीयते, तथा तत्र प्रदक्षिणात्रयमपि दातव्यं, दत्ताश्च तिस्रः प्रदक्षिणा विजयदेवेन निजराजधानीसिद्धायतने, व्याख्यातं चैतत्तृतीयोपाङ्गजीवाभिगमविवरणे श्रीहरिभद्रसूरिभिः । तथा अमितेजःखेचरेश्वरचैत्यगृहे चारणश्रमण्यां ताः प्रदत्ताः, बालचन्द्रया च विद्याधर्या वैताढ्योपरितने सिद्धायतने कृताः, वसुदेवेन हरि-[illegible]वनोपरितनसिद्धायतने विहिताः । एतच्च सर्वं वसुदेवहिण्डौ प्रतिपादितम् । सङ्घा० १ प्रस्ता० । ( हरिकुलादिसम्बन्धो 'वसुदेव' शब्दे )

जिनगृहप्रवेशे प्रणामत्रिकम्-

प्रदक्षिणात्रयानन्तरं च देवगृहलेपकपोतकपाषाणादिकलापनकर्मकरसारादिकरणेत्यादिजिनगृहविषयव्यापारपरम्पराप्रतिषेधरूपां द्वितीयां नैषेधिकीं मध्ये मुखमण्डपादौ कृत्वा मूलबिम्बसंमुखं प्रणामत्रिकं करोति ।

-यदाहुः-

"ततो निसीहियाए, पविसित्ता मंडवम्मि जिणपुरओ ।
महिनिहियजाणुपाणी, करेइ विहिणा पणामतियं ॥ १ ॥
तयणु हरिसुल्लसंतो, कयमुहकोसो जिणिंदपडिमाणं ।
अवणेइ रयणिवसियं, निम्मल्लं लोमहत्थेणं ॥ २ ॥
जिणगिहपमज्जणं तो, करेइ कारेइ वा वि अन्नेण ।
जिणबिंबाणं पूयं-तो विहिणा कुणइ जहजोगं ॥ ३ ॥
अह पुव्वं चिय कुणइ, हविज्ज पूया कया सुविहवेण । "
तां च विशिष्टान्यपूजासामग्र्यभावे नोत्सारयेत्, भव्यानां तद्दर्शनजन्यपुण्यानुबन्धिपुण्यानुबन्धस्यान्तरायप्रसङ्गात् ।

किं तु-

" तं पि सविसेससोहं, जह होइ तहा तहा कुज्जा ॥ ४ ॥
निम्मल्लं पि न एवं, भन्नइ निम्मल्ललक्खणाभावा ॥
भोगविणट्ठं दव्वं, निम्मल्लं बिंति गीयत्था " ॥ ५ ॥
यज्जिनबिम्बारोपितं सच्छायीभूतं विगन्धिसंजातं दृश्यमानं च निःश्रीकतया न भव्यजनमनःप्रमोदहेतुस्तन्निर्माल्यं ब्रुवन्ति बहुश्रुताः ।
एवमङ्गपूजां वक्ष्यमाणां चाग्रपूजां कृत्वा चैत्यवन्दनां चिकीर्षुस्त्वेवंविधं निर्माल्यमेवं च नैत्यव निर्णयो न काऽपि दृश्यते ।
" इत्तो चेव जिणाणं, पुणरवि आरोवणं कुणंति जहा ।
वत्थाहरणाईणं, जुगलियकुंडलियमाईणं ॥ ६ ॥ "

नैवं चेत्—

" कहमन्नह एगाए, कालाईए जिणिंदपडिमाणं ।
अट्ठसयं लूहंता, विजयाई वन्निया समए " ॥ ७ ॥
आगमेऽर्हदर्थसार्थसमानयनादिरूपो जिनपूजाविषयोऽपि सावद्यव्यापारो देववन्दनाऽवसरे न कार्यः, यथोचितद्विगवग्रहस्तृतीयां जिनपूजाकरणव्यापारपरित्यागरूपां नैषेधिकीं करोति । पुष्पफलपानीयनैवेद्यप्रदीपप्रमुख एव " सव्वत्थवि तिवारं, सिराइ नमणे पणामतियं।" यद्वा भावितम्-" तिन्नि निसीही तिन्नि य पयाहिणं " इत्यर्थः । तत्र यदुक्तम्-" करेइ

विहिणा पणामतियं ति । " तत्प्रणामस्वरूपनिरूपिकेयं गाथा- "अञ्जलिबंधो अद्धो-णओ य पंचंगओ य तिपणामो" । अञ्जलिबन्धरूप इत्यस्यायमर्थः-स्वाध्यायादिदर्शनविज्ञापनादिसमये भक्तिकृते करद्वययोजनेति त्रिकत्रयम् । संप्रति "तिन्नि चेव पणामेत्ति " तृतीयं त्रिकं भावयन्नाह-"अंजलिबंधो गाहा" प्रकटया सोपयोगा चेति व्याख्यायते-इहैकः प्रणामोऽञ्जलिकरणं, शीर्षादौ वा अञ्जलिना करणं, तत्र च परिभ्रम्य विज्ञापनाकृते मुखादिप्रदेशे संस्थापनम् । यथाऽऽगमः " चक्खुप्फासे अंजलिपग्गहणं । " तथा-" अंजलिमउलियहत्थे तित्थयराभिमुहे सत्तट्ठपयाइं अभिगच्छइ । "तथा-" सिरसावत्तं दसनहं मत्थए अंजलिं कट्टु एवं वयासी।" तथा-"सिरसावत्तं दसनहं मत्थए अंजलिं कट्टु जएणं विजएणं वद्धावेइ, वद्धाविता एवं वयासी " इत्यादि । उपलक्षणमेतदेकहस्तस्याप्यूर्द्धीकरणादेः, गौरवार्हप्रतिपत्तये तथाकरणस्य लोके दर्शनात् । अन्यस्त्वर्द्धावनतरूप ऊर्द्धादिस्थानस्थितैः किञ्चिच्छिरोनमनं शिरःकरादिना भूपर्यादिस्पर्शनं चेत्यादिस्वरूपः । उक्तं चागमे—" आलोए जिणपडिमाणं पणामं करेइ । "

तथा बृहद्भाष्ये-

" तत्तो नमो जिणाणं, ति भणिय अद्धोणयं पणामं च ।
काउं पंचंगं वा, भत्तिभरनिब्भरमणेण ॥ १ ॥ " त्ति ।

एकाङ्गादि चतुरङ्गान्तं प्रणामम्, उपलक्षणमिदम्-अङ्गानि न सर्वाणि, एकद्वित्र्यादङ्गान्यवनतानि यत्र प्रणामे सोऽर्द्धावनत इति व्युत्पत्तेः । अपरस्तु पञ्चाङ्गः पञ्च न चत्वार्यपि, अङ्गानि जानुद्वयादीनि भूस्पृष्टानि यत्र स पञ्चाङ्गः । उक्तं च-

" दो जाणू दुन्नि करा , पंचमगं होइ उत्तमंगं तु ;
संमं संपणिवाओ , नेओ पंचंगपणिवाओ " ॥ १ ॥

एते त्रयः प्रणामाः सर्वत्र वा भूम्याकाशशिरःप्रभृतिषु उक्तप्रणामेषु वा प्रणामकरणकाले त्रीन् वारान् शिरःकराञ्जल्यादेर्भ्रमणावर्तनादिना प्रणामत्रिकं भवति कर्त्तव्यं, विजयदेववत् । विशेषविषयस्त्वत्र एव द्वारावसरव्याख्यानतो, बहुश्रुतपर्युपास्तेश्च ज्ञातव्यः ॥ सङ्घा० १ प्रस्ता० । प्रव० ( पूर्वसूचितविजयदेवसम्बन्धोऽन्यत्र )

( ५ ) उक्तम्-" तिन्नि निसीही तिन्नि य, पयाहिणा तिन्नि चेव य पणामे " त्ति त्रिकत्रयम् । संप्रति चतुर्थं पूजात्रिकं सकलगाथयाऽनेकधा भावयन्नाह-

अंगग्गभावभेया, पुप्फाहारत्थुईहि पूयतिगं ।
पंचोवयार अट्ठो-वयार सव्वोवयारा वा ॥

अङ्गं च जिनप्रतिमागात्रम्, अग्रं च तत्पुरोभागः, भावश्च चैत्यवन्दनागोचर आत्मनः परिणामविशेषः । कैः कृत्वेत्याह-पुष्पाहारस्तुतिभिर्यथाक्रममिति गम्यम् ।

यदुक्तं बृहद्भाष्ये-

" अंगग्गिम पुप्फपूआ, आमिसपूआ जिणग्गओ बीया ।
तइया थुइथुत्तगया, तासि सरूवं इमं होइ " ॥

चैत्यवन्दनाचूर्णावप्युक्तम्—" तिविहा पूआ पुप्फेहिं नेवज्जेहिं थुईहिं य, सत्तभेया इत्थ चेव पविसंति त्ति ।" उत्तराध्ययनेषु पुनरेवम्-" तित्थयरा भगवंता, तस्स चेव भत्ती कायव्वा, सा पूआ वंदणाईहिं हवइ, एयं पि पुप्फामिसथुईपडिवत्तिभेयं चउव्विहं पि जहासत्तीए कुज्ज त्ति।" ललितविस्तरादौ तु-पुष्पामिषस्तोत्रप्रतिपत्तिपूजानां यथोत्तरं प्राधान्यमिति । सङ्घा०१ प्रस्ता० । ( एताश्चैत्यशब्दे दर्शिता अपि विस्तरभिया तत्रानुक्ता अपि सदृष्टान्ताः सङ्घाचाराद्वसेयाः)

त्रिदिग्निरीक्षणविरतिः-यस्यां दिशि तीर्थकृत्प्रतिमा तत्संमुखमेव निरीक्षणं विधेयं,न पुनरन्यादिक्त्रयसंमुखं, चैत्यवन्दनस्यानादरतादिदोषप्रसङ्गात् । यथा चैत्यवन्दनं कर्तुकामेन सत्त्वादेः रक्षणनिमित्तं सम्यक् चक्षुषा निरीक्ष्य निजचरणनिक्षेपभूमेः प्रमार्जनं त्रिवारं विधेयं, तत्र गृहिणा वस्त्राञ्चलेन, व्रतिना तु रजोहरणेनेति ।

" वर्णादित्रयमिति " विवृणोति-

" वन्नत्थालंबणओ, वन्नाइतियं वियाणेज्ज त्ति " ।

वर्णा अकारककारादयः, अर्थः शब्दाभिधेयम्,आलम्बनं प्रतिमादिरूपमेतस्मिन् त्रितये उपयुक्तेन भवितव्यम् ।

तत्रालम्बने यथा-

" अष्टाभिः प्रातिहार्यैः कृतसकलजगद्विस्मयः कान्तकान्तिः,
सिञ्चन् पीयूषपूरैरिव सदसि जनं स्मेरदृष्टिप्रपातैः ॥
निःशेषश्रीनिदानं निखिलनरसुरैः सेव्यमानः प्रमोदादर्हन्नालम्बनीयः स्फुरदुरुमहिमा वन्दमानेन देवान् ॥ १ ॥ "

" मुद्दातिगं चेति " व्याचष्टे-

" जिणमुद्दजोगमुद्दा, मुत्तासुत्ती उ तिन्नि मुद्दाओ त्ति " ।
जिनमुद्रा, योगमुद्रा, मुक्ताशुक्तिमुद्रा चेति मुद्रात्रयं ज्ञातव्यम्। प्रव० १ द्वार ।

( ६ ) उक्तम्-" तिविहा पूया य तह त्ति " चतुर्थं पूजात्रिकम् । पूजां च कुर्वतो भगवतोऽवस्थात्रिकं भावनीयमिति पञ्चमं त्रिकं पर्यायाभ्यामाह-

भाविज्ज अवत्थतियं, पिंडत्थपयत्थरूवरहियत्तं ।
छउमत्थ केवलित्तं, सिद्धत्तं चेव तस्सऽत्थो ॥

भावितार्था । ननु च-"पिण्डस्थं च पदस्थं च,रूपस्थं रूपवर्जितम् । ध्यानं चतुर्विधं ज्ञेयं,संसारार्णवतारकम्"॥१॥इति चतुर्धा ध्यानविद्भिर्ध्यानमुच्यते । अत्र त्ववस्थात्रिकेण ध्यानत्रयमुक्तमतोऽत्र चतुर्थं ध्यानं कथं स्यात् ?। उच्यते-रूपस्थध्यानं हि जिनबिम्बादिदर्शनतः प्रथममेव संजायते । यत उक्तम्-" पश्यति प्रथमं रूपं, स्तौति ध्येयं ततः पदैः । तन्मयः स्यात्ततः पिण्डे, रूपातीतः क्रमाद्भवेत् ॥१॥ " इति स्यादेव यथोक्तध्यानसिद्धिः । सङ्घा० १ प्रस्ता० । [ अवस्थात्रयभावना सङ्घाचाराद् विस्तरेण ज्ञेया ]

प्ररूपिता सिद्धावस्था, तत्प्रतिपादनेन च निरूपितमवस्थात्रिकभावनमिति पञ्चमं त्रिकम् । तच्च दिक्त्रयालोकनवर्जनेन सम्यक् स्यादित्यतः " तिदिसिनिरिक्खणविरइ " त्ति षष्ठत्रिकस्वरूपनिरूपणार्थं गाथामाह-

उड्ढाहो तिरियाणं, तिदिसाण निरिक्खणं चइज्जऽह वा।
पच्छिमदाहिणवामा-ण जिणमुहन्नत्थदिट्ठिजुओ ॥

प्रकटा सुगमा च । नवरं तुर्यपदस्येयं भावना-

" आलोयणं चक्खुं, मणुओ तं दुक्करं थिरं काउं ।
रूवेहिं तहिं खिप्पइ, सभावओ वा सयं चलइ ॥ १ ॥
तह वि हु नामियगीवो, विसेसओ दिट्ठितियं न पेहिज्जा ।
तदुवओगाभावे, दंसणपरिणामहाणी उ ॥ २ ॥ "

उक्तं च महानिशीथे-" भुवणेक्कगुरुजिणिंदपडिमाविणिवेसिय-

छिच्छि-धिक्धिक्-अव्य० । धीप्सायां द्विर्वचनम् । " गोणादयः " । ८ । २ । १७४ । इति धिग्धिगित्यस्य स्थाने 'छिच्छि' इत्यादेशो निपातनात् । प्रा० २ पाद । निन्दायाम् , एतद्योगे निन्दावाचकादुत्तरत्वाद् द्वितीया । "धिक् धिक् शक्राजितं प्रबोधितवता किं कुम्भकर्णेन वा । " वाच० ।

छिच्छिकार-धिक्धिक्कार-पुं० । पुनःपुनर्धिक्कारे, स्था० ५ ठा० ३ उ० ।

छिज्ज-छेद्य-न० । छेत्तुं योग्ये, सूत्र० २ श्रु० ५ अ० ।

छिज्जउं-छेत्तुं-अव्य० । छित्त्वा कर्तुमित्यर्थे, तं० ।

छिज्जमाण-छिद्यमान-त्रि० । खड्गादिभिः खण्ड्यमाने, उपा० ७ अ० । छिद्यमानं छिन्नम् । भ० १ श० १ उ० । प्रज्ञा० । विपा० ।

छिड्ड-छिद्र-न० । छिद्-रक् । छिद्-अच् वा । दूषणे, गर्ते, अवकाशे, ज्योतिषोक्ते लग्नतोऽष्टमस्थाने, वाच० । प्रवेशद्वारे, प्रश्न० ३ आश्र० द्वार । नि० चू० । राजव्यापारविरलत्वे, विपा० १ श्रु० २ अ० । अल्पपरिवारत्वे, विपा० १ श्रु० १ अ० । छिद्रश्छेदनस्यास्तित्वाच्छिद्रम् । भ० २ श० २ उ० ।

छिड्डगुम-छिद्रगुम-पुं० । फणिने , नि० चू० १३ उ० ।

छिड्डघाति-छिद्रघातिन्-पुं० । छिद्रे अवसरे घ्नन्तीत्येवंशीला ये ते तथा । सत्यवसरे घातकारिषु , प्रश्न० ३ आश्र० द्वार । "छिड्डु परिसवति " । " छिड्डाणि पुणो तोए थोप्पालए भएणंति " नि० चू० १ उ० ।

छिड्डपाणि-छिद्रपाणि-पुं० । सतद्विधपात्रनियोगसमन्विते जिनकल्पिके, आचा० २ श्रु० १ अ० ३ उ० ।

छिण्ण-छिन्न-त्रि० । छिद्-क्तः । कृतच्छेदने, लूने, अपनेते, वाच० । त्रुटिते, आतु० । निराकृते, आ० म० द्वि० । आचा० । अपनीते, सूत्र० १ श्रु० ८ अ० । अपगते, उत्त० २ अ० । विप्रच्छे, ज्ञा० १ श्रु० १७ अ० । विपा० । " वाहच्छिन्ना व गद्दभा " । छिन्नाः कर्तितास्त्रुटिताः । सूत्र० १ श्रु० ३ अ० ४ उ० । त्रोटिते, सूत्र० १ श्रु० ११ अ० । छिद्यते इति छिन्नम् । वस्त्रादीनां मूषकादिना दशने, उत्त० १५ अ० । द्विधा कृते, नं० । आचा० । उत्त० । प्रश्न० । विपा० । औ० । निर्धारिते, बृ० १ उ० । आरे, दे० ना० ३ वर्ग ।

छिण्णकहंकह-छिन्नकथंकथ-त्रि० । छिन्ना अपनीता कथं कथमपि या कथा रागकथादिका विकथारूपा येन स छिन्नकथंकथः । यदि वा कथमिदं कृतमरणप्रतिज्ञां निर्वाहयिष्य इत्येवंरूपा या कथा सा छिन्ना येन स छिन्नकथंकथः । दुष्करानुष्ठानविधायिनि, आचा० १ श्रु० ८ अ० ६ उ० ।

छिण्णगंथ-छिन्नग्रन्थ-त्रि० । छिन्नो ग्रन्थो धनधान्यादिः, तत्प्रतिबन्धो वा येन सः । छिन्नस्त्यक्तो हिरण्यादिग्रन्थो येन स तथा । निर्ग्रन्थे, स्था० ६ ठा० । ज्ञा० । कल्प० । प्रश्न० ।

छिण्णच्छेय-छिन्नच्छेद-त्रि० । छिन्नो द्विधाकृतः पृथक्कृतः छेदः पर्यन्तो येन स छिन्नच्छेदः । प्रत्येकं कल्पितपर्यन्ते, नं० ।

छिण्णच्छेयणय-छिन्नच्छेदनय-पुं० । यो नयः सूत्रं छेदेन छिन्नमेवाभिप्रैति, न द्वितीयेन सूत्रेण सह संबन्धयति तस्मिन्नयविशेषे, यथा-"धम्मो मंगलमुक्किट्ठं " इति श्लोकम् । तथा ह्ययं श्लोकः छिन्नच्छेदनयमतेन व्याख्यायमानो न द्वितीयादीन् श्लोकानपेक्षते, नापि द्वितीयादयः श्लोका अमुम् । अयमत्राभिप्रायः-तथा कथञ्चनाप्यमुं श्लोकं पूर्वसूरयः छिन्नच्छेदनयमते व्याख्यान्ति स्म , यथा न मनागपि द्वितीयादिश्लोकानामपेक्षा भवति, द्वितीयादीनपि श्लोकान् तथा व्याख्यानयन्ति स्म , यथा न तेषां प्रथमश्लोकस्यापेक्षा, तथा सूत्राण्यपि स्वसमयाभिप्रायेण परस्परं निरपेक्षाणि व्याख्यान्ति स्म स छिन्नच्छेदनयः । छिन्नो द्विधाकृतः पृथक्कृतः छेदः पर्यन्तो येन स छिन्नच्छेदः, प्रत्येकं कल्पितपर्यन्त इत्यर्थः । स चासौ नयश्च छिन्नच्छेदनयः । नं० । आ० म० । स० ।

छिण्णच्छेयणइय-छिन्नच्छेदनयिक-त्रि० । छिन्नछेदनयोऽस्त्यस्य "अतोऽनेकस्वरात्" ॥ ७ । २ । ६ ॥ इतीकप्रत्ययः । छिन्नच्छेदनयवर्तीनि, यथा द्वादशाङ्गे ऋजुसूत्रादीनि द्वाविंशतिः सूत्राणि छिन्नच्छेदनयिकानि । नं० । स० ।

छिण्णजाला-छिन्नज्वाला-स्त्री० । इन्धनस्याग्निस्त्रुटितार्चिषि, पञ्चा० १३ विव० ।

छिण्णऽद्धाणंतर-छिन्नाध्वान्तर-न० । पथिभेदे, यत्र ग्रामनगरपल्लीव्रजिकानां किञ्चिदेकतरमपि नास्ति, सर्वथैव शून्यत्वात् । बृ० १ उ० ।

छिण्णपुव्व-छिन्नपूर्व-त्रि० । पूर्वं द्विधा कृते , उत्त० ११ अ० ।

छिण्णबंधण-छिन्नबन्धन-पुं० । छिन्नमपनीतं बन्धनं कषायात्मकं येन स छिन्नबन्धनः । ममत्वरहिते, सूत्र० २ श्रु० ८ अ० । ध्य० ।

छिण्णमडंब-छिन्नमडम्ब-न० । अनासन्नवसत्यन्तरे, " छिण्णमडंबं णाम जस्स गामस्स णगरस्स वा उग्गहे सव्वासु दिसासु अण्णो गामो णऽत्थि गोकुलं वा तच्छिन्नमडंबं, तं च असंसत्तं भवति " नि० चू० १० उ० ।

छिण्णरुह-छिन्नरुह-पुं० । छिन्नः सन् रोहति । रुह्-कः । तिलकवृक्षे, गुडूच्याम्, स्त्री० । स्वर्णकेतक्याम् , शल्लक्यां च । स्त्री० । वाच० । छित्त्वा गृहादानीतं शुष्कतामवस्थां प्राप्तमपि जलादिसामग्रीं प्राप्य गुडूच्यादिवत्पुनरपि यत्प्ररोहति तच्छिन्नरुहम् । तदेतैर्लक्षणैः साधारणं शरीरं कृपमनन्तकायिकमित्यर्थः । प्रव० ४ द्वार । प्रज्ञा० ।

छिण्णसोय-छिन्नशोक-त्रि० । नष्टशोके, ओघ० । प्रश्न० ।

छिन्नस्रोतस्-त्रि० । छिन्नान्यपनीतानि स्रोतांसि संसारावतरणद्वाराणि यथाविषयमिन्द्रियवर्तनानि प्राणातिपातादीनि वा आस्रवद्वाराणि येन सः । सूत्र० १ श्रु० १५ अ० । स्रोतो द्विविधम्-द्रव्यस्रोतो, भावस्रोतश्च । तत्र द्रव्यस्रोतो नद्यादिप्रवाहः । भावस्रोतश्च संसारसमुद्रपातयशुभो लोकव्यवहारः, स छिन्नो येन स तथा । त्रुटितद्रव्यभावप्रवाहे, प्रश्न० ५ संव० द्वार । औ० । सूत्र० । उत्त० ।

छिण्णाल-छिन्नाल-पुं० । तथाविधदुष्टजातौ , " छिन्नाले छिंदई सेलि " उत्त० २७ अ० । बृ० । जारे, दे० ना० ३ वर्ग ।

छिण्णावाय-छिन्नापात-त्रि० । छिन्नोऽपगत आपातोऽन्योऽन्यत आगमनात्मकोऽर्थाजनस्य येषु ते छिन्नापाताः । विविक्ते-

सु मार्गेषु , उत्त० २ अ० । व्यवच्छिन्नसमागमेषु, बृ० ४ उ० । छिन्ना आपाताः सार्थगोकुलादीनां यस्यां सा तथा । स्था० ४ ठा० २ उ० । व्यवच्छिन्नसार्थघोषाद्यापातायाम , भ० १५ श० १ उ० ।

छित्त-क्षेत्र-न० । स्थाने, ज्ञा० १ श्रु० १ अ० ।

स्पृष्ट-न० । " क्तेनाप्फुण्णादयः " । ८ । ४ । २५८ । इति स्पृष्टशब्दस्य ' छित्त ' आदेशः । प्रा० ४ पाद । दे० ना० ३ वर्ग ।

छित्तर-छित्वर-न० । वंशादिमये आदनाधारजुते किलिञ्जे, भ० ७ श० ७ उ० ।

छिद्द-छिद्र-न० । रन्ध्रे, भ० १२ श० ४ उ० । प्रज्ञा० । वाच० । नं० । अल्पपरिवारत्वे, विपा० १ श्रु० ६ अ० । पं० सू० । " खलः सर्षपमात्राणि, परच्छिद्राणि पश्यति । आत्मनो बिल्वमात्राणि, पश्यन्नपि न पश्यति ॥ १ ॥ " उत्त० ३ अ० । लघुमनस्के, दे० ना० ३ वर्ग ।

छिद्दपेहि (ण्)-छिद्रपेक्षिन्-पुं० । छिद्राणि प्रमत्ततादीनि प्रेक्षते इति । पराश्रितयोग्यप्रमत्ततादिरूपप्रतिसेवनाकर्तरि, स्था० ५ ठा० १ उ० ।

छिन्द-छिद्-धा० । द्वेधीकरणे, " छिदिभिदो न्दः " । ८ । ४ । २१६ । इति छिदर्दस्य ' न्द ' आदेशः " छिन्दइ " छिनत्ति । प्रा० ४ पाद ।

छिन्दावण-छेदन-न० । वनस्पत्यादीनामन्यैश्छेदने, ' छपणं ' प्रायश्चित्तं चतुर्थमाचाम्लमेकाशनकं निर्विकृतिकं वा । महा० ७ अ० ।

छिप्प-स्पृश-धा० । तुदा० पर० सक० अनिट् । स्पर्शे, वाच० । " स्पृशश्छिप्पः " । ८ । ४ । २५७ । स्पृशतः कर्मभावे ' छिप्प ' आदेशो वा भवति, क्यलुक् च । ' छिप्पइ ' स्पृश्यते । प्रा० ४ पाद ।

छिप्प-देशी-न० । भिक्षायां, पुच्छे च । दे०ना०३ वर्ग । विपा० ।

छिप्पंत-क्षिप्यमाण-त्रि० । तूर्यभेदे, आ० चू० १ अ० ।

छिप्पंती-देशी-व्रतभेदे । उत्सवे च । दे० ना० ३ वर्ग ।

छिप्पतूर-क्षिप्रतूर्य-न० । द्रुत वाद्यमाने तूर्ये, ज्ञा० १ श्रु० १६ अ० । " छिप्पतूरेणं वज्झमाणेणं " विपा० १ श्रु० ३ अ० ।

छिप्पदूर-देशी-गोमयखण्डे विषमे, दे० ना० ३ वर्ग ।

छिप्पोल्ली-छिप्पोल्ली-स्त्री० । चर्करादिखण्डे, नि० चू० १ उ० ।

छिरा-शिरा-स्त्री० । " शिरायां वा " । ८ । १ । २६६ । शिराशब्दे आदेशः । प्रा० १ पाद । नाडीषु, शिरा नाड्यः । जं० १ श० ३३ उ० ।

छिलिय-सिलित-न० । सीत्कारकरणे,प्रश्न० ३ आश्र० द्वार ।

छिल्लवण-पलाशवन-न० । मधुरास्थे पलाशवने, ती० १ कल्प ।

छिव-स्पृश-धा० । प०-सक०-अनिट् । स्पर्शे, "स्पृशः फासफंसफरिसछिवछिहालुंखालिहाः " । ८ । ४ । १८२ । इति स्पृशतेः ' छिव ' आदेशः । प्रा० ४ पाद । श्लक्ष्णे, ज्ञा० १ श्रु० २ अ० । ' छिवन्ति ' कुर्वन्ति धारयन्ति, हस्ताञ्जलिभिरिति गम्यते । प्रश्न० ४ आश्र० द्वार ।

छिवण-स्पर्शन-न० । छुपने, जीवा० १७ अधि० ।

छिवा-छिपा-स्त्री० । श्लक्ष्णचर्मकशायाम्, विपा० १ श्रु०६ अ० ।

छिवाडिआ-छेदपाटी-स्त्री० । वल्लादिफलिकायाम्,जं०१ वक्ष० ।

छिवाडियपोत्थय-छेदपाटीपुस्तक-न० । " छिवाडिय ताहे । तणुपत्तूसियरूवा, होइ छेवाडी बुहा बेंति ॥ ४ ॥ दीहो वा हस्सो वा, जो पिहुलो होइ अप्पबाहल्लो । तं मुणिय समयसारा, छिवाडिपोत्थं भणंतीह ॥ ५ ॥ " ( छिवाडिय त्ति ) तनुभिः पत्रैरुच्छ्रुतरूपः किञ्चिदुन्नतो भवति छेदपाटीपुस्तक इति । स्था० ४ ठा० २ उ० ।

छिविअ-देशी-न० । इक्षुखण्डे, दे० ना० ३ वर्ग ।

छिविऊण-स्पृष्ट्वा-अव्य० । स्पर्शं कृत्वेत्यर्थे, महा० ७ अ० ।

छिव्व-देशी-न० । कृत्रिमे , दे० ना० ३ वर्ग ।

छिह-स्पृश-धा० । प०-तुदा०-सक०-अनिट् । स्पर्शे, "स्पृशः फासफंसफरिसछिवछिहालुंखालिहाः" । ८ । ४ । १८२ । इति स्पृशः ' छिह ' आदेशः । प्रा० ४ पाद ।

छिहली-छिहली-स्त्री० । शिखायाम्, बृ० ४ उ० । वाच० ।

छिहंड-शिखण्ड-न० । मयूरशिखायाम्, ज्ञा० १ श्रु० १ अ० ।

छिहंडअ-देशी-न० । दधिसरे, दे० ना० ३ वर्ग ।

छिहंडि(ण्)-शिखण्डिन्-पुं० । शिखण्डोऽस्त्यस्य इति । मयूरे, वाच० । शिखावति, ज्ञा० १ श्रु० १ अ० ।

छिहा-स्पृहा-स्त्री० । स्पृहा-कः । "छत्त्वपादौ" । ८ । १ । १२८ । कृपा इत्यादिषु आदेरपादस्य छ्त्वं भवति इति छत्वम् । प्रा० १ पाद । "स्पृहायाम्" । ८ । २ । २३ । स्पृहाशब्दे संयुक्तस्य छो वा भवति इति छः । प्रा० २ पाद । सर्पघातिनी ( कङ्कालिका ) वृक्षे, कण्टकार्यां च, स्त्री० । गौरा० ङीष् । वाच० ।

छी-श्री-स्त्री० । विल्वयुक्ते , वृक्षलतायाम् , एका० ।

छीय-क्षुत-न० । क्षवणं क्षुतम् । "क्षोऽक्ष्यादौ" । ८ । २ । १७ । इति छः । प्रा० २ पाद । " इः क्षुते " । ८ । १ । ११२ । इति आदेरुत इत्वम् । प्रा० २ पाद । छिक्कायाम् , नि० चू० १ उ० । ल० । आ० म० । आ० चू० । वाच० । नं० । विशे० ।

छीयमाण-क्षुवत्-पुं० । क्षुतं कुर्वति,आचा०२ श्रु० २ अ० ३ उ० ।

छीण-क्षीण-त्रि० । क्षि-क्तः । "क्षः खः क्वचित्तु छझौ" । ८ । २ । ३ । इति क्षस्य छः । प्रा० २ पाद । दुर्बले, क्षामे च । वाच० ।

छीर-क्षीर-पुं० । न० । क्षि-क्रन्-दीर्घश्च । 'घस' अदने-इरन् किच्च उपधालोपे, चर वा अच्छर्यां० । वाच० । "क्षोऽक्ष्यादौ " । ८ । २ । १७ । इति क्षस्य छः । प्रा० २ पाद । दुग्धे, जले, सरलद्रवे, वाच० ।

छीरविरालिया-क्षीरविडालिका-क्षीरविदारिका-स्त्री० । क्षीरमिव शुभ्रा विदारी । श्वेतभूमिकूष्माण्डे. वाच० । क्षीरप्रधाना विदारी । शुक्लकृष्णयोर्भूमिकूष्माण्डयोः, वाच० । जीवा० । जं० ।

छीरल-क्षीरल-पुं० । भुजपरिसर्पविशेषे, प्रश्न०१ आश्र० द्वार ।

छु-छु-अनुकरणशब्दः । क्षुद्रजीवनिवारणे, बृ० १ उ० ।

छुई-देशी-बलाकायाम्, दे० ना० ३ वर्ग ।

छुंछुमुसय-देशी-रणरणके, दे० ना० ३ वर्ग ।

छुंदं-देशी-बहुनि, दे० ना० ३ वर्ग ।

छुक्कारण-धिक्कारण-न० । धिक्कारे,पुनः पुनर्धिक्कारे च । बृ०२ उ० ।

छुच्छुक्करंत-छुच्छुकुर्वत्-त्रि० । छुच्छुगितिशब्देन कुक्कुरान् निवारयति, आ० म० द्वि० । आचा० ।

छुज्जमाण-क्षुद्यमान-त्रि० । पीड्यमाने, संथा० ।

छुड्ड-छुटित-त्रि० । मुक्ते, आव०४ अ० ।

छुड्डिया-क्षुद्रिका-स्त्री० । आभरणविशेषे, प्रश्न०५ सम्ब० द्वार ।

छुण्ण-क्षुण्ण-त्रि० । क्षुद-क्तः । "क्षोऽक्ष्यादौ" । ८ । २ । १७ । इति क्षस्य छः । प्रा०२ पाद । अभ्यस्ते, विहते, चूर्णीकृते च । वाच० । पिष्टे, संथा० । आचा० ।

छुण्णाछुण्ण-क्षुण्णाक्षुण्ण-त्रि० । पिष्टापिष्टे, संथा० ।

छुत्त-छुप्त-त्रि० । स्पृष्टे, आचा०१ श्रु०१ अ०४ उ० । सूत्र० ।

सुत्त-न० । स्वप-भावे क्तः । संप्रसारणम् । निद्रायाम्, शयने, सुषुप्तौ, कर्तरि-क्तः । निद्रिते, त्रि० । वाच० ।

छुद्दहीर-देशी-न० । शिशौ, विधौ च । दे० ना०३ वर्ग ।

छुन्द-आक्रम-पुं० । आ-क्रम-घञ्-अवृद्धिः । "आक्रमेरोहावोत्थारच्छुन्दाः" । ८ । ४ । १६० । इत्याक्रमेः 'छुन्द' आदेशः । प्रा० ४ पाद । बलेनातिक्रमणे, वाच० ।

छुप्प-क्षुप्-धा० । तुदा०-पर०-सक०-अनिट् । "गमादीनां द्वित्वम्" । ८ । ४ । २४६ । गमादीनामन्त्यस्य कर्मभावे द्वित्वं वा भवति, तत्सन्नियोगे क्यस्य च लुक्, इति पस्य द्वित्वम् । 'छुप्पइ-छुविज्जइ' क्षुप्यते । प्रा० ४ पाद ।

छुप्पंत-क्षिपत्-त्रि० । प्रक्षिपति, नि० चू०१ उ० ।

छुमा-क्षमा-स्त्री० । भूमौ, दश० १ चू० ।

छुर-छुर-धा० । तुदा०-पर०-सक०-सेट् । छुरति, अच्छुरीत्,चुच्छोर, छुरितः । लेपने, वाच० । चुरा०-पर०-सक०-सेट् । छोरति, अच्छोरीत्, चुच्छोर । छेदे, वाच० ।

छुर-पुं० । क्षुर-कः, क्षु-रक् वा । "क्षोऽक्ष्यादौ" । ८ । २ । १७ । इति क्षस्य छः । प्रा० २ पाद । नापितास्त्रे, पश्वादीनां शफे, (खुर) कोकिलाक्षे, गोक्षुरे, महापिण्डीतके, बाणे च । खट्वादिपादुकायाम्, वाच० ।

छुरघरय-क्षुरगृहक-न० । नापितस्य चर्मोर्णादिमये क्षुरकर्तर्याद्याधारे उपकरणे, नि० चू० १ उ० ।

छुरमड्डि-देशी-क्षुरहस्ते, दे० ना० ३ वर्ग ।

छुरमुंड-क्षुरमुण्ड-पुं० । क्षुरमुण्डितशिरसि, पञ्चा०१० विव० ।

छुरिया-छुरिका-स्त्री० । छुर-छेदे,स्वार्थे कः,टापि अत इत्वम् । स्वनामख्याते अस्त्रभेदे, वाच० । आचा० । आ० म० । उत्त० । मृत्तिकायाम्, दे० ना० ३ वर्ग ।

छुह-क्षिप-धा० । दिवा०पर०सक०-अनिट् । "क्षिपेर्गलत्थाड्डक्खसोल्लपेल्लणोल्लछुहहुलपरीघत्ताः" । ८ । १४३ । इति क्षिपेः 'छुह' आदेशः । 'छुहइ' । प्रा० ४ पाद । प्रेरणे, वाच० । 'छुहइति' प्रवेशयति । व्य० १ उ० । 'छुहंति' प्रक्षिपन्ति । आ० म० प्र० ।

छुहा-क्षुधा-स्त्री० । "क्षोऽक्ष्यादौ" । ८ । २ । १७ । इति क्षस्य छः । प्रा० २ पाद । बुभुक्षायाम्, पं० सू० ३ सूत्र । आ० म० । उत्त० । "पंथसमा नऽत्थि जरा, दारिद्दसमो य परिभवो नऽत्थि । मरणसमं नऽत्थि भयं, छुहासमा वेयणा नऽत्थि" ॥ १ ॥ गच्छा० २ अधि० । "क्षुधार्तः शक्तिमान् साधु-रेषणां नातिलङ्घयेत् । बाणामात्रोदितो विद्वा-नदीनो वल्कलम्बरेत् ॥ १ ॥" आ० म० द्वि० ।

सुधा-स्त्री० । "षट्शमीशावसुधासप्तपर्णेष्वादेश्छः" । ८ । १ । २६५ । इति सस्य छः । प्रा० १ पाद । अमृते, लेपन (कलीचून) द्रव्ये, वाच० ।

छुहिअ-देशी-लिप्ते, दे० ना० ३ वर्ग ।

छूढ-क्षिप्त-त्रि० । क्षिप-क्तः । "वृक्षक्षिप्तयो रुक्खछूढौ" । ८ । २ । १२७ । इति क्षिप्तस्य 'छूढ' आदेशः । प्रा० २ पाद । "न दीर्घानुस्वारात्" । ८ । २ । ९२ । दीर्घानुस्वाराभ्यां लाक्षणिकाभ्यामलाक्षणिकाभ्यां च परयोः शेषादेशयोर्द्वित्वं न भवति । प्रा० २ पाद । प्रेरिते, त्यक्ते, विकीर्णे, अवज्ञाते, रागद्वेषादिवशाद्विषयाऽऽसक्तचित्ते, वायुरोगग्रस्ते च । वाच० । नि० चू० । व्य० । उत्त० ।

छेओ-देशी-अन्ते, देवरे च । दे० ना० ३ वर्ग ।

छेओवट्ठावण-छेदोपस्थापन-न० । छेदेन पूर्वपर्यायनिरोधेन उपस्थापनमारोपणं महाव्रतानां यत्र तच्छेदोपस्थापनम् । संयमभेदे, पञ्चा० ११ विव० । अनु० । "छेत्तूण तु परियागं, पोराणं जो ठवेति अप्पाणं । धम्मम्मि पंचजामे, छेओवट्ठावणे स खलु" ॥ पं० भा० ।

छेओवट्ठावणिय-छेदोपस्थापनिक (नीय)-पुं० । छेदस्य पूर्वपर्यायस्योपस्थापनं च व्रतेषु यत्र तच्छेदोपस्थापनम् । तदेव छेदोपस्थापनिकम् । तद्वा विद्यते यत्र तच्छेदोपस्थापनिकम् । अथवा-पूर्वपर्यायच्छेदेन उपस्थाप्यते आरोप्यते यन्महाव्रतलक्षणं चारित्रं तच्छेदोपस्थापनीयम् । तदपि द्विधा-अनतिचारं,सातिचारं च । तत्रानतिचारम्-यदित्वरसामायिकस्य शिष्यकस्यारोप्यते पार्श्वनाथसाधोर्वा पञ्चयामधर्मप्रतिपत्तौ । सातिचारं-यन्मूलप्रायश्चित्तप्राप्तस्येति । इहापि गाथे—

"परियायस्स उ छेओ, जत्थोवट्ठावणं वएसु य छेदो ।
छेदोवट्ठावणमिह, तमणइयारेतरं दुविहं ॥ १ ॥
सेहस्स निरइयारं, तित्थंतरसंकमेव तं होज्जा ।
मूलगुणघाइणो सा-इयारमुभयं च ठियकप्पे" ॥ २ ॥

प्रथमपश्चिमतीर्थयोरित्यर्थः । ध्या० ५ ठा० २ उ० । भ० । पञ्चा० । अनु० । विशे० । उत्त० । कर्म० । पं० सं० । स्था० । आ० म० ।

अथ छेदोपस्थापनाय साधूनां कल्पस्थितिमाह-

दसठाणठिओ कप्पो,पुरिमस्स य पच्छिमस्स य जिणस्स ।
एसो धुयरयकप्पो, दसठाणपतिट्ठिओ होति ॥

दशस्थानस्थितः कल्पः पूर्वस्य च पश्चिमस्य च जिनस्य तीर्थक-

स्य, छेदोपस्थापनीयसाधूनां सम्बन्धः । तदेवम् एष धृतरजाः कल्पो दशस्थानप्रतिष्ठितो भवति ।

तान्येव दश स्थानानि दर्शयति-

**आचेलक्कुद्देसिय-सिज्जायररायपिंडकिइकम्मे ।**

**वतजेट्ठपडिकमणे, मासप्पज्जोसवणकप्पो ॥**

आचेलक्यमौद्देशिकं शय्यातरपिण्डो राजपिण्डः कृतिकर्मव्रतानि ( जेट्ठ त्ति ) पुरुषज्येष्ठो धर्मप्रतिक्रमणं मासकल्पः पर्युषणाकल्पश्चेति द्वारगाथासमासार्थः । बृ० ६ उ० । विशे० । स्था० । आव० । औ० ।

छेग्रोवट्ठावणियचरित्तलद्धि- छेदोपस्थापनिकचरित्रलब्धि - स्त्री० । छेदे प्राक्तनसंयमस्य व्यवच्छेदे सति यदुपस्थापनीयं साधावारोपणीयं तच्छेदोपस्थापनीयम्, पूर्वपर्यायच्छेदेन महाव्रतानामारोपणमित्यर्थः । तच्च सातिचारमनतिचारं च । तत्रानतिचारं यदित्वरसामायिकस्य शिक्षकस्यारोप्यते, तीर्थान्तरसंक्रान्तौ वा । यथा-पार्श्वनाथतीर्थाद्वर्धमानस्वामितीर्थे संक्रामतः पञ्चयामधर्मप्रतौ । सातिचारं तु-मूलगुणघातिनो यद् व्रतारोपणं तच्च तच्चारित्रं च छेदोपस्थापनीयचारित्रं, तस्य लब्धिः छेदोपस्थापनीयचरित्रलब्धिः चरित्रलब्धिविशेषे, भ० ८ श० २ उ० ।

छेज्ज-छेद्य-त्रि० । छेत्तुं योग्यः कर्मणि योग्यार्थे यत् । भेत्तुं योग्ये, " शीर्षच्छेद्यमनोऽहं त्वाम् " भट्टिः । वाच० । पत्रच्छेद्यादौ ग्रथितभेदे, दश० २ अ० ।

छेड्डा-देशी-शिखायाम्, नवमालिकायाम्, दे० ना० ३ वर्ग ।

छेड्डी-देशी-लघुरथ्यायाम् , दे० ना० ३ वर्ग ।

छेत्त-क्षेत्र-न० । " छोऽक्ष्यादौ " । ८ । २ । १७ । इति संयुक्तस्य छः । प्रा० २ पाद । क्षाने, ओघ० । रा० ।

छेत्तरं-देशी-जीर्णे, दे० ना० ३ वर्ग ।

छेत्तसोवणय-देशी-न० । सत्रजागरणे, दे० ना० ३ वर्ग ।

छेत्ता-छेत्तृ-त्रि० । छेदकर्तरि, छेत्ता भवति कर्णनासाविकर्तनतः । आचा० १ श्रु० २ अ० १ उ० ।

छेत्तुमण-छेत्तुमनस्-त्रि० । छेत्तुमभिप्रायिणि, आचा० १ श्रु० २ अ० १ उ० ।

छेप्पो-देशी-स्थासके, चौरे च । दे० ना० ३ वर्ग ।

छेभग्रो-देशी-स्थासके, दे० ना० ३ वर्ग ।

छेय-छेक-पुं० । छो-वा-केकन् । गृहाशक्ते मृगपक्ष्यादौ, नागरविदग्धे, त्रि० । विदग्धप्रिये शब्दालङ्काररूपे अनुप्रासभेदे, मत्तायां स्त्रियाम् , स्त्री० । वाच० । प्रयोगज्ञे, ज्ञा० १ श्रु० १ अ० । अनु० । न० । उपा० । निपुणे, सूत्र० १ श्रु० १३ अ० । ज्ञा० । प्रश्न० । रा० । औ० । जी० । दक्षे, आ० म० प्र० । विशे० । ज्ञा० । जं० । " छेयलाघवपहारसाधिया " छेका दक्षा लाघवप्रहारेण दक्षतायुक्तघातेन साधिता निर्मिता येऽस्ते तथा । प्रश्न० ३ आश्र० द्वार । अवसरज्ञे, कल्प० ३ क्षण । विघ्नपरिहारदक्षे, कल्प० २ क्षण । जीवा० । आ० म० । अवसरज्ञे सप्ततिकलापण्डिते, औ० । " इय छेयओ त्ति " छेका इत्येवमुपलक्ष्यमानाद्भुतप्रकारेण, एवमन्यत्रापि छेकाः प्रशस्तकाः प्रस्तावज्ञाः कलापण्डिता इति वृद्धा व्याचक्षते । उपा० ७ अ० ।

छेद-पुं० । छिद्-भावे घञ्, अच्-वा । छेदने, छेदके, भाजके, " छेदं गुणं गुणं छेदम् " इति लीलावती । कर्मणि घञ् । खण्डे, त्रि० । खण्डार्थस्य तु त्रिलिङ्गत्वम् क्रियां गौरा० ङीष्, ततो नित्यमर्हति ठञ्, छैदिकम् । नित्यच्छेदार्हे वेतसादौ, वाच० । पर्यन्ते, नं० । प्रश्न० । विनाशे, आ० म० द्वि० । विभजनाङ्के, मण्ड० । करपत्रादिभिः पाटने, आव० ६ अ० । आचा० । तपसा दुर्दमस्याहोरात्रपञ्चकादिना क्रमेण श्रमणपर्यायच्छेदने, पञ्चा० १६ विव० । ध० । "माईसु पंचराया-इ पज्जायछेदणं छेदो", ग०१ अधि० । यस्मिन् पुनरापतिते प्रायश्चित्ते सदूषितपूर्वपर्यायदेशावच्छेदः शेषपर्यायरक्षानिमित्तं दुष्याधिसंदूषितशरीरैकदेशच्छेदनमिव शेषशरीरावयवपरिपालनाय क्रियते भवे छेदार्हत्वाच्छेदः । व्य० १ उ० ।

संप्रति लाघवमवक्ष्यमाणच्छेदार्हमपि प्रायश्चित्तमत्रैव विधेयं प्रतिपादयति—

**एएसिं अएणयरं, निरंतरं अतिचरेज्ज तिक्खुत्तो ।**

**निक्कारणमगिलाणे, पंच उ राइंदिया छेदो ॥**

एतेषामनन्तरोदितानां रात्रिन्दिवपञ्चकप्रायश्चित्तविषयाणां स्थानानामन्यतरस्थानमग्लानो निष्कारणं यो निरन्तरमतिचरेत् त्रिःकृत्वस्त्रीन् वारान्, तदा तत्पर्यायस्य छेदः क्रियते पञ्च रात्रिन्दिवानि, तथाऽत्रैवमेतत्-यच्चानन्तरोदितेषु स्थानेषु मासलघुकानि प्रायश्चित्तान्युक्तानि तेषामन्यतरस्थानमग्लानो निष्कारणं यदि निरन्तरं त्रीन् वारान् अतिचरति, तदा तत्पर्यायस्य छेदो मासिक इति द्रष्टव्यम् । व्य० १ उ० । सप्तमे प्रायश्चित्ते, स्था० ४ ठा० १ उ० । आव० ।

छेयकर-छेदकर-पुं० । अप्रशस्तमनोविनये, औ० । आचा० ।

छेयकुडगरूवग-छेककूटकरूपक-पुं० । छेकश्चासौ शुद्धः कटकश्च कथञ्चिदशुद्धश्छेककूटकः, स चासौ रूपकश्च छेककूटकरूपकः । शुद्धाशुद्धमुद्रायाम्, वन्दनायाः शुद्धाशुद्धविचारे, पञ्चा० ३ विव० । ( छेककूटकरूपकदृष्टान्तः ' चेइयवंदण ' शब्देऽस्मिन्नेव भागे १३३२ पृष्ठे द्रष्टव्यः )

छेयगंथ-छेदग्रन्थ-पुं० । उत्सारकशास्त्रे, जीवा० ११ अधि० । जीतकल्पनिशीथादौ, प्रव० १० द्वार । ते च षट्-निशीथं, महानिशीथं, दशाश्रुतस्कन्धो, बृहत्कल्पः, व्यवहारः पञ्चकल्पश्चेति । ह्री० २ प्रका० ।

छेयण-छेदन-न० । ' छिद् ' भावे ल्युट् । द्विधा करणे, ज्ञा० १ श्रु० १७ अ० । अनु० । उत्त० । प्रश्न० । परिच्छेदकारिवचसि, बृ० १ उ० । जीवत एव हृदयोत्कर्तने, दशा० ६ अ० । बृ० । नि० चू० । उत्तरोत्तरशुभाध्यवसायारोहणात् स्थितिह्रासजनने, आचा० १ श्रु० ८ अ० ८ उ० । " एगे छेयणे " छेदनं शरीरस्यान्यस्य वा खड्गादिना । स्था० १ ठा० १ उ० ।

छेयणग-छेदनक-न० । शस्त्रादौ, सूत्र० २ श्रु० ३ अ० । द्वैधीकरणे, अनु० । अजीवभेदे, सूत्र० २ श्रु० ३ अ० । सूक्ष्मावयवे, बृ० १ उ० ।

छेयबुद्धि-छेकबुद्धि-स्त्री० । निपुणबुद्धौ, सूत्र० १ श्रु० १३ अ० ।

छेययर-छेदकर-पुं० । व्यवच्छेदकारिणि, पञ्चा० ३ विव० ।

छेयवाइ ( ण् )-छेकवादिन्-पुं० । निपुणोऽहमित्येवं वादिनि पण्डिताभिमानिनि, सूत्र० १ श्रु० १३ अ० ।

छेयमारहि [ ण् ]-छेकमारथिन्-पुं० । प्रार्जि गरि. श्री० ।

छेयसुत्त-छेदसूत्र-न० । कल्पाऽऽदौ, आ० म० द्वि० । महा० ।

( छेदसूत्रग्रथयुक्तिकाऽस्तु 'चौक्खिआय' शब्देऽस्मे वक्ष्यते )

" परिणाम अपरिणामा, अइपरिणामा य तिविह पुरिसा उ । णातूण छेदसुत्तं, परिणामगेँ होति दायव्वं ॥ " पं० भा० ।

( 'अइपरिणामग' शब्दे प्रथमभागे ४ पृष्ठे चैतद् व्याख्यातम् )

छेयसुद्धि-छेदशुद्धि-स्त्री० । पदे पदे तदोगलकारिक्रियो-पदर्शने, ध० १ अधि० । विधिप्रतिषेधयोरबाधकस्य सम्यक् तत्पालनोपाय तुनस्यानुष्ठानस्योक्तौ, हारि० १ अष्ट० ।

तत्स्वरूपं यथा-

तत्संभवपालना चेष्टोक्तिश्छेद इति । तयोर्विधिप्रतिषेधयोरना-विर्भूतयोः संभवः, प्रादुर्भूतयोश्च पालना रक्षाकृता, ततस्तत्सं-भवपालनार्थ या चेष्टा भिक्षाऽटन ऽऽदिरूपा क्रियाऽऽत्र, तस्या उक्तिः छेदः । यथा-कष शुद्धावप्यान्तरामशुद्धिमाशङ्कमानाः सौ-वर्णिकाः सुवर्णगोलिकाऽऽदेः छेदमाद्रियन्ते, तथा कषशुद्धावपि धर्मस्य छेदमपेक्षन्ते, स च छेदो विशुद्धबाह्यचेष्टारूपो, विशुद्धा चेष्टा सा, यया सम्भावितो विधिप्रतिषेधावबाधितरूपौ स्वात्मानं लभेते, लब्धाऽऽत्मानौ चातीचारमलक्षालापवार्गविरहितौ उत्तरोत्तरां वृद्धिमनुभवतः, सा यत्र धर्मे चेष्टा सम्प्रपञ्चा प्रोच्यते, स धर्मः छेदशुद्ध इति । ध० १ अधि० । " बज्झाणुट्ठाणेणं, जेण न बाहिज्जए तयं णियमा । संभवइ य परिसुद्धं, सो पुण धम्मम्मि छेउ त्ति " ॥२॥ स्था० ३२ अष्टो०द्वी० ।

छेदमेवाऽऽह-

सइ अप्पमत्तयाए, संजमजोएसु विविहभेएसु ।

जा धम्मिअस्स वित्ती, एअं बज्झं अणुट्ठाणं ॥ ७२ ॥

सदा अप्रमत्ततया हेतुभूतया, संयमयोगेषु कुशलव्यापारेषु, विविधभेदेष्वनेकप्रकारेषु, या धार्मिकस्य साधोः वृत्तिर्वर्तना, एतद् बाह्यमनुष्ठानमिहाधिकृतमिति गाथार्थः ॥ ७२ ॥

एएण न बाहिज्जइ, संभवइ अ तं दुगं पि निअमेण ।

एयवयणेण सुद्धो, जो सो छेएण सुद्धो त्ति ॥ ७३ ॥

एतेनानुष्ठानेन न बाध्यते, संभवति च वृद्धिं याति, तद् द्वयमपि विधिप्रतिषेधरूपं नियमेन एतद्वचनेन यथोदितानुष्ठानोक्त्या शुद्धो य आगमः स छेदेन शुद्ध इति गाथार्थः ॥ ७३ ॥

इदं चोदाहरणमाह—

जह पंचसु समिईसुं, तासु अ गुत्तीसु अप्पमत्तेण ।

भणिअं चिय कायव्वं, जइणा सइ काइगाइ वि ॥ ७४ ॥

यथा पञ्चसु समितिष्वीर्यासमित्यादिरूपासु, तिसृषु च गुप्तिषु मनोगुप्त्यादिरूपासु, अप्रमत्तेन सता संयमतानुष्ठानं कर्तव्य यतिना साधुना, तदा, कायिकाऽऽदि, आस्ता तावदन्यदिति गाथार्थः ॥ ७४ ॥

तथा—

जे खलु पमायजणगा, वम्महाई ते वि वज्जणिज्जा उ ।

महुअरवित्तीएँ तहा, पालेअव्वा अ अप्पा णो ॥७५॥

ये खलु प्रमादजनकाः पश्चात्या मन्मथादयः, आदिशब्दात् स्थानशेषादिग्रहः, तेऽपि वर्जनीया एव सर्वथा, मधुकरवृत्त्या कुसुमरसमावरिहारेण, तथा पालनीय एवाऽऽत्मा, नो काले स्यादुप इति गाथार्थः ॥ ७५ ॥

अत्र व्यतिरेकमाह-

जत्थ उ पमत्तयाए, संजमजोएसु विविहभेएसु ।

नो धम्मिअस्स वित्ती, अणुट्ठाणं तयं होइ ॥ ७६ ॥

यत्र तु प्रमत्ततया हेतुभूतया, संयमयोगेषु संयमव्यापारेषु, विविधभेदेषु विचित्रविकल्पेषु । नो धार्मिकस्य तथाऽप्रयत्नतः, वृत्तिर्वर्तना, अननुष्ठानं वस्तुस्थित्या तन्नवृत्ति, तत्कार्यासाधकत्वादिति गाथार्थः ॥ ७६ ॥

एएणं बाहिज्जइ, संभवइ अ तं दुगं न णिअमेण ।

एअवयणोववेओ, जो सो छेएण नो सुद्धो ॥ ७७ ॥

एतेनाऽनुष्ठानेन बाध्यते, संभवति न वृद्धिमुपगच्छति च, तद् द्वयं विधिप्रतिषेधरूपं न नियमेन, एतद्वचनो नैतदर्थविधानुष्ठानवचनेन युक्तो य आगमः स छेदेन प्रस्तुतेन न शुद्ध इति गाथार्थः ॥७७॥

अस्योदाहरणमाह-

जह देवाणं संगी-अगाइकज्जम्मि उज्जमो जइणो ।

कंदप्पाइ करणं, असब्भवयणाभिहाणं च ॥ ७८ ॥

यथा देवानां संगीतकाऽऽदिकार्यनिमित्तमुद्यमो यतेः प्रव्रजितस्य । यथोक्तम्-"संगीतकेन देवस्य, प्रतराऽऽत्रणादाद्यः तत्प्री-त्यर्थमतो यत्नः, तत्र कार्यो विशेषतः ॥१॥" तथा कन्दर्पाऽऽदिकरणं कुचेष्टाऽऽदिना, तथाऽसत्यवचनाभिधानं च अलीकातकोऽहमित्यादि । एव किल तद्देवतायकर्मकृत्य इति गाथार्थः ।

तह अन्नधम्मियाणं, उच्छेओ भोअणं गिहे गंतुं ।

असिधाराइ अ एअं, पावं बज्झं अणुट्ठाणं ॥ ७९ ॥

तथा अन्यधार्मिकाणां तीर्थान्तरीयाणामुच्छेदो विनाशः । यथोक्तम्-"अन्यधर्मस्थिताः सत्त्वा, असुरा इव विष्णुना । उच्छेदनीयास्तेषां हि, वधिदोषो न विद्यते ॥१॥" इति । ततो भोजनं गृह गृहे गत्वा तदनुग्रहाय, तथा असिधाराऽऽदिवध प्रवृत्तेन्द्रियजयाय, एतत्पापं पापहेतुत्वाद् बाह्यमनुष्ठानमशोभनमिति गाथार्थः ७९ ॥ पं० व० ३ द्वार ।

छेयसुय-छेदश्रुत-न० । छेदश्रुतानि कल्पव्यवहाराऽऽदीनि । तेषु, व्य० १ उ० । ( छेदश्रुतानि श्रमणोऽपि व्याख्यास्यन्तीति 'आलोयणा' शब्दे द्वितीयभागे ४९७ पृष्ठे उक्तम् । श्रावकाः छेदसूत्राणि न पाठयितव्या इति श्रावकपाठनाधिकारे व्याख्यास्यते )

छेयायरिय-छेकाचार्य-पुं० । शिल्पाऽऽचार्ये, भ० ७ श० ६ उ० । राय० । "छेयायरियसवत्तमइकप्पणाविकप्पेहिं छेको य न पुणो" आचार्यः शिल्पोपदेशदाता, तस्योपदेशाद् मतिर्बुद्धिः, तस्या या कल्पनाविकल्पाः कल्पितभेदास्ते तथा ते । भ० ७ श० ६ उ० ।

छेयारिह-छेदार्ह-न० । यथा शाखाद्रव्यार्थं व्याधिदूषितमङ्गं छिद्यते, एव यत्रोपपर्यायैरत्रार्थमतीचारानुमानेन दूषितः पर्यायो यत्र छिद्यते तच्छेदार्हः । जीत० । पर्यायच्छेदयोग्ये सप्तमे प्रायश्चित्ते, स्था० १० ठा० ।

इदानीं छेदार्हप्रायश्चित्तं गाथात्रयेणाऽऽह-

तवगव्विओ तवस्स य, असमत्थो तवमसद्दहंतो य ।

तवसा य जो न दमइ, अइपरिणाम-प्पसंगी य ॥ ८० ॥

सुबहुत्तरगुणभंसी, छेयावत्तिसु पसज्जमाणो य ।

पासत्थाई जो वि य, जईण पडितप्पओ बहुसो ॥८१॥



इति

श्रीमत्सौधर्मबृहत्तपागच्छीय–कलिकालसर्वज्ञकल्प–स

जैनश्वेताम्बराचार्य श्री श्री १००८ श्री मद्भट्टारक

श्रीमद्विजयराजेन्द्रसूरीश्वरमहाराजविर

“ शब्दसङ्कलनात्मके ” श्री अभिधानराजेन्द्रकोषे



तृतीयो भागः समाप्तः

